ISSN :- ०९७४-८९४६

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**(A REFEREED QUATERLY RESEARCH JOURNAL)**

**37 वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) 2012 ई0**

प्रधानसम्पादकः
**प्रो॰ उषारानीकपूर**
कुलपतिः (प्रभारी)

सम्पादकः
**प्रो॰ रमेशकुमारपाण्डेयः**

सहसम्पादकः
**डॉ॰ ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# मानवता कालिदासाभिमता

**प्रो. रमेशकुमारपाण्डेयः**

सरसिजम् इति कथिते सौरभस्य, सरः इति सम्मुचारणे सरसिजस्य, भारतम् इत्युक्ते संस्कृतभाषायाः, संस्कृतमित्युदीरिते कालिदासस्य, कालिदासः इत्यभिहिते महाकवित्वस्य कविकुलगुरुत्वस्य वा निसर्गतो जायते स्मृतिः। कविकुलगुरुत्वादेवास्य कनिष्ठिकाधिष्ठिततत्वम्। कविकुलगुरुत्वे च सन्ति नैके हेतवः। तेषु भारतीयसंस्कृतेः याथातथ्येन निरूपणं सर्वप्रमुखम्। स कालिदासः कस्मिन् प्रदेशे कस्मिंश्च काले समुत्पन्न इति सम्प्रत्यपि विवादविषयः। किन्तु कालजयिनोऽस्य कवेः काव्येषु कुत्रचित् देवतात्मा हिमालयः, अन्यत्र गङ्गा तीर्थराजप्रयागश्च, पाठकनां मनो रञ्जयति उज्जयिनीवर्णनविशेषस्तु महाकवेः उज्जयिनीं प्रति किमप्यसाधारणं स्नेहातिशयमिभिव्यनक्ति। महाराष्ट्रस्य रामटेक इतिस्थले समुत्पन्नः कालिदास इति केचित् हिमगिरिक्रोडे जात इति केचन, बङ्गेषु समुत्पन्न इत्यन्ये, उत्कलप्रान्ते अभूदिति भिन्ने मिथिलास्वित्यपरे समुद्गिरन्ति। वस्तुतः कालिदासस्य माताऽखिला भारतभूमिः। अयमपि सम्पूर्णायाः भारतभूमेः वात्सल्यपात्रमपत्यरत्नम्। अतोहेतुना कालिदासो भारतीयां सनातनीं परम्परां न कदापि विस्मरति। रूपकं वा भवेत् श्रव्यकाव्यं वा तत्रात्मत्वेन भारतीयसंस्कृतेः मूलमेव प्रतिष्ठापयति। रघुवंशस्य प्रथमसर्गे यथोक्तं तेन--

**रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥**[१]

अर्थात् कुशलसारथिप्रेरिता रथनेमय इव राज्ञः दिलीपस्य प्रजाः मनुकालात् प्रवृत्तम् सन्मार्गं रेखामात्रमपि न जहुः। अर्थात् मनुमानिते मार्गे महती तस्य श्रद्धा। मनुर्वदति यत्--

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥**[२]

सन्तोषो धृतिः, परेणापकारे कृते तस्य प्रत्यपकारानाचरणं क्षमा, विकारहेतुविषये सन्नि-धानेऽप्यविक्रियत्वं मनसो दमः। अन्यायेन परधनादिग्रहणं स्तेयं तद्भिन्नम् अस्तेयं, यथाशास्त्रं मृज्जलाभ्यां देहशोधनं शौचम्, विषयेभ्यश्चक्षुरादिवारणमिनिद्रयनिग्रहः शास्त्रादितत्त्वज्ञानं धीः, आत्मज्ञानं विद्या,

---

१. रघु. १/१७
२. मनु ६/९२

यथार्थाभिधानं सत्यं, क्रोधहेतौ सत्यपि क्रोधानुत्पत्तिरक्रोधः एतद्दशविधं धर्मस्वरूपं मानवस्य अर्थात् एतान् विहाय मानवत्वं मानवता वा न सम्भवति।

महाकविकालिदासः स्वकाव्यनायकानाधारीकृत्य भारतीयसनातनसंस्कृतेः उपर्युक्तानि तत्त्वानि विवृणोति एतत् रघुवंशस्य प्रारम्भिकेषु पद्येष्वेव स्फुटीभवति। सूर्यवंशीयान् दिलीपप्रभृतिनृपान् वर्णयितुमसमर्थमात्मानं स्वाल्पविषयकमतिमन्तं कविमाख्याति। तद्यथा--

**क्व सूर्यप्रभवो वंशः क्वचाल्पविषया मतिः ।**

**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥**

**मन्दः कवियशः प्रार्थी गमिष्याम्युपहासताम् ।**

**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥**[३]

अनेन खलु महाकवेर्विनयातिशयः व्यज्यते। भारतीयपरम्परायां बद्धादरः स कथयति यत्--

**अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।**

**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥**[४]

अर्थात् वाल्मीकिव्यासादिभिः प्रदर्शितं मार्गमाश्रित्यैव कालिदासस्य काव्ययात्रा प्रवर्तते इति। नितान्तं परम्परावादी कविरसौ स्वल्पामपि स्वैरितां न सहते। काव्यकथायाः प्रारम्भे मुनेः वाल्मीकेः 'पूर्वसूरिभिः' इति पदेन स्मरणं सप्रयोजनमेवास्ति। वाल्मीकिरामायणस्यारम्भिक- कतिपयश्लोकानां परिशीलनेनैतद्विदितं भवति यत् काव्यस्य केन्द्रीभूतस्य नायकस्य किं स्वरूपमपेक्षितं भवति? तत्र नायके के के गुणाः भवेयुः? मुनिर्वाल्मीकिः तपःस्वाध्यायनिरतं वाग्विदां वरं नारदं प्राप्य पृच्छति यत् अस्मिन् साम्प्रतिके काले कः गुणवान् वीर्यवान्, धर्मज्ञः, कृतज्ञः, सत्यवाक्यः, दृढव्रतः, चारित्रयुक्तः, सर्वभूतहितः, विद्वान्, समर्थः, प्रियदर्शनः, आत्मवान्, जितक्रोधः, द्युतिमान्, अनसूयकः, संयुगभयानकः प्रभृतिभिर्गुणैः युक्तो मानवो विद्यते? मुनिना वाल्मीकिना षोडशगुणविशिष्टस्य पुरुषस्य कस्यचित् संस्थितौ जिज्ञासा समुपस्थापिता।[५]

३. रघु. १/२-३

४. र. १/४

५. तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥
कोन्वस्मिन् साम्प्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान्कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥
आत्मवान् को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ (वा.रा. १/१/१-४)

तप:स्वाध्यायशीलो देवर्षिनारदः खलु तस्याः जिज्ञासायाः समाधानं चतुषष्टिगुणैः युक्तस्य मानवोत्तमस्य रामस्य वृत्तं वर्णितवान्। स नियतात्मा, महावीर्यः, द्युतिमान्, धृतिमान्, वशी, बुद्धिमान्, नीतिमान्, वाग्मी, श्रीमान्, शत्रुनिबर्हणः, विपुलांसः, महाबाहुः, कम्बुग्रीवः, महाहनुः, महोरस्को, महेष्वासः, गूढजत्रुः, अरिन्दमः, आजानुबाहुः, सुशिराः, सुललाटः, सुविक्रमः, समः, समविभक्ताङ्गः, स्निग्धवर्णः, प्रतापवान्, पीनवक्षा, विशालाक्षः, लक्ष्मीवान्, शुभलक्षणः, धर्मज्ञः, सत्यसन्धः, प्रजाहितरतः, यशस्वी, ज्ञानसम्पन्नः, शुचिः, वश्यः, समाधिमान्, जीवलोकरक्षिता, धर्मपरिरक्षिता, वेदवेदाङ्गतत्त्वज्ञः, धनुर्वेदनिष्णातः, सर्वशास्त्रार्थतत्त्वज्ञः, स्मृतिमान्, प्रतिभावान्, सर्वलोकप्रियः, साधुः, अदीनात्मा, विचक्षणः, सदभिगतः, आर्यः, सर्वसमः, प्रियदर्शनः, सर्वगुणोपेतः, कौसल्यानन्दवर्धनः, गम्भीरः, धीरः, महावीर्यः, सोमवत्प्रियदर्शनः, क्रोधकालाग्निः, क्षमी, त्यागी, धार्मिकः, सत्यपराक्रम-प्रभृतिभिर्गुणैः युक्तस्य दशरथसुतस्य रामस्य विषये प्रोक्तवान्।[६]

अनन्तरं ब्रह्मणा प्रेरितो वाल्मीकिः पुरुषोत्तमस्य रामस्य निखिलं चरितं वर्णितवान्।

तद्यथा --

६. इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ।।
बुद्धिमान्नीतिमान् वाग्मी श्रीमाञ्छत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ।।
महोरस्को महेष्वासो गूढशत्रुररिंदमः ।
अजानुबाहुः सुशिराः सुललाटः सुविक्रमः ।।
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ।।
धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ।।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ।।
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ।।
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैकप्रियनन्दनः ।।
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ।।
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथवीसमः ।।
धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
तमेवं गुणसम्पन्नं रामं सत्यपराक्रमं ।।
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
यौवराज्ये संयोक्तुमैच्छत्प्रीत्या महीपतिः ।। (वा.रा. १/१/८-१९)

**उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्तिमान्।**
**समाक्षरैः श्लोकशतैः यशस्विनो यशस्करं काव्यमुदारधीर्मुनिः॥**[७]

वाल्मीकिकाव्यसरणिमनुसरता महाकविना कालिदासेनापि रघुवंशीयानां राज्ञामादौ वैशिष्ट्यं प्रत्यपादि येन तेषां स्वभावस्यानितरसाधारणता प्रकाशिता भवति। तेन तत्र मानवतायाः कृते अपेक्षितानां सर्वेषां गुणानां स्फुटतया निरूपणं कृतम्। ते राजानः आजन्मशुद्धाः, आफलोदयकर्माणः, आसमुद्रक्षितीशाः, आनाकरथवर्त्मानः, यथाविधिहुताग्नयः, यथाकामार्चितार्थिनः, यथापराधदण्डाः, यथाकालप्रबोधिनः, त्यागाय संभृतार्थाः, सत्याय मितभाषिणः, यशसे विजिगीषवः, प्रजायै गृहमेधिनः, शैशवेऽभ्यस्तविद्याः यौवनै विषयैषिणः, वार्धके मुनिवृत्तयः, अन्ते योगेन तनुत्यजो भवन्ति।[८]

अत्र कालिदासेन षोडश गुणविशिष्टानां राज्ञां चरितनिबन्धने स्वप्रवृत्तिः प्रदर्शिता, प्रवृत्तौ च कारणं मानवतायाः गुणगणमेव मनुते।[९] इमे सर्वेऽपि गुणाः भारतीयसंस्कृतेर्वैशिष्ट्यं द्योतयन्ति। अग्निवर्णं विहाय सर्वेऽपि रघुवंशीया राजानः मनुमानितमार्गानुसारेणैव शासनं कृतवन्तः। दिलीपविषये कालिदासः कथयति यत् स प्रजानां भूत्यर्थं बलिं गृह्णाति तस्यादर्शः सूर्य एव।

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥**[१०]

तथा स ज्ञानी सन्नापि मौनी आस्ते, शक्तो भवन्नपि क्षमाशीलतायाः व्रतमातिष्ठते, त्यागशीलोऽपि च न श्लाघां कामयते --

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव ॥**[११]

एवमेव रघोः विषये मानवताप्रकर्षः साक्षात्क्रियतेऽस्माभिः। ते सर्वेऽपि मानवीयाः गुणाः रघौ चित्रिता दृश्यन्ते ये खलु मन्वादिभिः निरुपिताः सन्ति।

---

७. (वा.रा. १/२/४१)

८. सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥
त्यागायसम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् । (रघु. १/५-८)
वाद्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥

९. तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः । (रघु. १/९)

१०. र. १/१८

वरतन्तुशिष्यस्य कौत्सस्य प्रसङ्गे तस्य दानशीलतायाः यो हि समुत्कर्षः प्राप्यते स तु अन्यत्र दुर्लभः। यदा कौत्सोऽभिदधाति यत् भवतां सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा गुरुदक्षिणाद्रव्यस्य अतिशयात्च्च सम्प्रति भवन्तम् उपरोद्धुं नाभ्युत्सहे इति। तदानीं तस्य रघोः यादृशी भावदशा कविना समुपनिबद्धा सा वस्तुतः मानवीयतायाः मूलं तत्त्वम्। तद्यथा--

**गुर्वर्थमर्थी श्रुतपादृश्वा रघोः सकाशादनवाप्य कामम् ।**

**गतो वदान्यान्तरमित्ययं मे माभूत्परीवादनवावतारः ॥**[१२]

वस्तुतः यशस्वितां दूषयितुं प्रस्तुतं किमपि कारणं सद्यः दूरीक्रियते सत्पुरुषैः। 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इत्यस्याप्ययमेवार्थः। कौत्सः तस्य रघोः कोषागारे स्वर्णवृष्टिमवलोक्य तदीयमत्यद्भुतं प्रभावं प्रशंसयति--

**किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।**

**अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥**[१३]

अर्थात् वृत्ते स्थितस्य प्रजानामधिपतेः भूः कामान् सूते । अत्र कालिदासेन प्रयुक्तं वृत्तपदं विशिष्टं किमप्याशयं प्रकाशयति। यतो हि कामन्दकनीतिसारे कथितमस्ति यत्--

**न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा ।**

**सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥ इति ।**

फलतः रघोः कोषागारे स्वर्णवृष्टिः किमपि आश्चर्यं न जनयति। वृत्ते स्थितस्य राज्ञः कृते स्वाभाविकमिदमिति।

सर्वेऽपि रघुवंशीया संयमशीलाः सन्ति। कुशाख्यानं तत्र महत्त्वपूर्णं प्रमाणम्।

**का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।**

**आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥**[१४]

**'रघूणां मनः परस्त्रीविमुखप्रवृत्ति'** इति वाक्यं सर्वथा समुचितमेव। एतदेव निदर्शनं भारतीयसंस्कृतेः, इयमेव मानवता कालिदाससम्मता। कालिदासभारती न केवलं रघुवंशे एवं विशदयति अपितु अभिज्ञानशाकुन्तलेऽपि। तत्र दुष्यन्तः आश्रमकन्यकां प्रकृतिपेलवां शकुन्तलां वीक्ष्य सकामो भवति। मनसि समुत्पन्नां शकुन्तलां प्रति कामभावनां युक्त्या विचारयति निश्चिनोति च यत् इयमाश्रमकन्यका अवश्यमेव क्षत्रपरिग्रहक्षमा आस्ते नान्यथा आर्यं मे मनः अस्यां प्रवृतं जायते।

---

११. र. १/२२

१२. र. ५/२४

१३. र. ५/२३

तद्यथा--

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥** [१५]

अभिज्ञानशाकुन्तलस्य पञ्चमेङ्के प्रत्याख्याते गान्धर्वविवाहे यदा शकुन्तला समुदाचारवशात् **'आर्यपुत्र'** इति व्यपदेष्टुं प्रयतते तदा तमभिधानं भर्त्सयति दुष्यन्तः--

**व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम्।**
**कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥** [१६]

दृष्टान्तमुखेन पुनः आत्मनः वशित्वं द्रढयति। तद्यथा--

**कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।**
**वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ (अ. ५/२८)**

परस्त्रीस्पर्शपांशुलता सर्वथा परित्याज्या भारतीयसंस्कृतौ । दुष्यन्तोऽपि मर्यादामिमां रक्षति वदति च-

**मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।**
**दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥** [१७]

कालिदासस्य मानवेषु अस्य संयमस्य महती प्रतिष्ठा । सुदक्षिणा अपांशुलानां धुरि कीर्तनीया राज्ञी सा हि तथैव पतिपरायणा यथा दक्षिणा यज्ञपरायणा यथा वा स्मृतिः श्रुत्यर्थपरायणा। वैदेही सीता स्वयमेव ब्रूते-

**वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।**
**तथा विश्वम्भरे मातर्मामन्तर्धातुमर्हसि ॥** [१८]

राजादिलीपः रघिधातुः गत्यर्थकोऽस्तीति विचार्य समुत्पन्नं स्वसुतं रघुनाम्ना व्यपदिशति-

**श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥** [१९]

१४. रघु. १६/८
१५. अभि. १/२०
१६. अभि. ५/२१
१७. अभि. ५/२९
१८. रघु. १५/८१
१९. रघु. ३/२१

वस्तुतः राष्ट्ररक्षार्थमुभयमप्यावश्यकं शास्त्रज्ञत्वं शस्त्रनिपुणत्वञ्च। स्वयं दिलीपः तादृशः आसीत्। तस्य शास्त्रेष्वकुण्ठिता बुद्धिः धनुषि च आतता मौवी उभयथा पारङ्गतत्वं प्रमाणयतः । एवमेव अन्येऽपि राजानः दृश्यन्ते कालिदाससाहित्ये।

अनेनैवं प्रतिभाति यत् कालिदासः आदर्शभूतं मानवजीवनं मनसि निधाय काव्यं करोति। तस्य साहित्ये सर्वगुणसम्पन्नाः नायकाः नायिकाश्च दृश्यन्ते। कालिदासस्यायमपरो विशेषः यत् स मानवं देवेभ्योऽपि विशिष्टतरं निबध्नाति। तस्य नायकः अजः गोत्रभिदोऽर्धासनमधिरोहति। कुशः समरे इन्द्रसाहाय्यं विधाय दिवस्पतेः सिंहासनार्धभाग् भवति। दुष्यन्तः खलु दैत्यान् निहत्य देवेन्द्रेण सह तस्य सिंहासनार्धे उपविशति। देवेन्द्रलोकनिवासिनी उर्वशी पुरुरवसवै रक्षिता। कालिदासेन मानवशक्तेः देवशक्त्यपेक्षया अतिशयं महत्त्वं प्रदर्शितम्। अयं खलु मानवस्य महिमा, यो हि तद्गतगुणैः सुतरां प्रकाशितो भवति। यदि कालिदासाहित्यस्य अध्ययनं सुचारुतया न विधीयते तदा किं तत्साहित्यस्यावदानम्? न किमपि। अतो मानवतायाः विकासाय कालिदाससाहित्यस्य अनुशीलनं सततमपेक्षते। **'रामादिवत् प्रवर्तितव्यं न रावणादिवत्'** इत्युपदेशकारित्वं तु साहित्यस्य प्रथितमेव। साहित्यं खलु समाजस्य नवनिर्माणे क्षममिति समीक्षकाणां विदुषां समयः अनेन विधिना वर्तमानकालिकदुष्प्रवृत्तेः निराकरणं विधाय समुचितं भविष्यद्विधानं किञ्चित्कर्त्तुं शक्यते इति ममाभिप्रायः।

# अभिनवकाव्यशास्त्रेऽभिराजराजेन्द्रमिश्रस्यावदानम्

**प्रो. अमिता शर्मा**

आमरतात् भारतीयकाव्यशास्त्रस्याविच्छिन्ना धारा प्रवाहिता वर्तते यस्मिन् नैके सिद्धान्ताः समुल्लसिता विभान्ति विविधकाव्यशास्त्रज्ञैः काव्यस्य शरीर-गुण-अलङ्कार-आत्मतत्त्व-भेदादीनधिकृत्य स्वविचाराः समुपस्थापिताः। काव्यकृतिषु स्व-स्वकालस्य प्रभावः स्पष्टमेव परिलक्ष्यते। अतएव विविधकालेषु विरचितासु रचनासु समयानुसारि परिवर्तनानि दृश्यन्ते।। लक्ष्यानुसारीणि लक्षणानि भवन्तीति मतमनुसृत्येदानीं काव्यशास्त्रेऽपि परिवर्तनमपेक्षितम्। यतो हि साम्प्रतिके युगे भारतस्य राजनैतिक-सामाजिक-परिवेशे परिवर्तनानि सञ्जातानि सन्ति। राजतन्त्रमपगतम्। प्रजातन्त्रे च प्रतिष्ठापिते सति सम्प्रति नृपाश्रितमितिवृत्तमाश्रित्य महाकाव्य-नाटकादीनि प्रायो न विरच्यन्ते। अथ च संस्कृतभाषायामपि अन्यभारतीयभाषासु प्रचलिता काव्यप्रकारा निर्मीयन्ते कविभिः परन्तु तेषां कृते कश्चित् काव्यशास्त्रावलम्बः नैवोपलभ्यते। अतएव कथानाट्यादिसम्बद्धानां नूतनप्रकाराणां नियमनिर्देशार्थं अभिनव काव्यशास्त्रविरचन-स्यावश्यकता काव्यतत्त्वविद्भिरनुभूयते। ब्रह्मानन्दंशर्म-राधावल्लभ-त्रिपाठी-प्रभृतिभिराचार्यप्रवरैः स्वकीयचिन्तनपरकाः काव्यशास्त्रीयग्रन्थाः प्रकाशिताः। अस्यामेव परम्परायाम् अभिराजराजेन्द्रमिश्रप्रणीतस्य अभिराजयशोभूषणमित्याख्यस्य ग्रन्थस्य कानिचित् वैशिष्ट्यान्यत्र प्रस्तूयन्ते। ग्रन्थोऽयं पञ्चोन्मेषु विभाजितोऽस्ति यथा हि परिचयोन्मेषः, शरीरतत्त्वोन्मेषः, आत्मतत्त्वोन्मेषः, निर्मितितत्त्वोन्मेषः, प्रकीर्णतत्त्वोन्मेषश्च। आचार्यप्रवरैः पूर्वाचार्याणां परम्परामाश्रित्यैव नूतनसरणिः प्रसारिता यथा ह्युक्तं – परम्परां सर्वथाऽपहाय नव्यं किञ्चिदाख्यातुं नोचितम्। यतो हि परम्परा निर्मीयते सहस्रमितानां पूर्वसूरीणां चिन्तनैः।'

ग्रन्थेऽस्मिन् पुरातनमपि सर्वं नवपरिवेशानुगुणं विधाय प्रस्तुतम्; विशिष्टरूपेण काव्यात्म-विषये काव्यभेद-विषये च। काव्यात्मविषयकषट्सिद्धान्तेषु रसोऽपि काव्यत्मरूपेण प्रतिष्ठापितः परं मिश्रवर्यस्य मतमस्ति यत् ब्रह्मसमकक्षरसतत्त्वं तु किमपि विलक्षणं नुक्तिकल्पमस्ति। रसस्य महिमानं त्वसावपि स्वीकरोति परं स मनुते यत्– यथा लोके जीवात्मापेक्षया परमपुरुषार्थरूपस्य मोक्षस्य महत्त्वमधिकं भवति तस्य लक्ष्यभूतत्वात् तथैव काव्येऽपि काव्यात्मभूतात् तत्त्वात् लक्ष्यभूतरसस्य महत्त्वमधिकमस्ति। काव्यात्मा तु काव्यगतावयवेष्वेव अन्यतमः कश्चन सजातीय एव भवितुं शक्नोति यथा जलस्यात्मा जलजातीयः दृषदात्मा दृषन्मयो भवति तथैव काव्यात्मपि काव्यजातीय एव भवेत्–

**आत्मापि स्यात्सजातीय इति वादो विपश्चिताम्।**
**जलात्मा जलजातीयो दृषदात्मा दृषन्मयः।।५७।।**

**धराजातीय एवात्मा धराया इति निश्चितम्।**
**नाग्नेरम्भोमयश्चात्मा भवितुं शक्नुयादिह।।५८।।**
**काव्यात्मापि तथैवायं काव्यजातीय एव हि।**
**यदि कश्चिद्भवेन्नूनं तदा न्यायोचितं भवेत्।।५९।।**

**तन्मतेऽर्थस्त्रिविधो भवति–** पदार्थः, वाक्यार्थः काव्यार्थश्चेति सहृदयानां मनांसि काव्यार्थे रमन्ते, स च काव्यार्थो व्यङ्ग्यार्थ एव भवति। अतएव स एव काव्यात्मा भवितुमर्हति–

**नूनं सहृदयश्लाघ्यो व्यङ्ग्यार्थ एव केवलम्।**
**काव्यार्थस्तादृशो यत्र मनो विश्राम्यति द्रुतम्।।६४।।**

**काव्यार्थभूतकाव्यस्य सजातीयतया स्थितः।**
**आत्मा स एव व्यङ्ग्यार्थ एवमानन्दवर्धनः।।६५।।**

आचार्यमिश्रस्य कथनमिदं सर्वथोपयुक्तं प्रतिभाति। यतो हि काव्ये शब्दार्थाभ्यां विभावानुभावव्यभिचारिणामेव निर्देशो भवति न तु रसस्य। काव्ये स्थितानां विभावादीनां सहृदयानां चेतस्सु वासनात्यतया विद्यमानेन स्थायिभावेन सह यदा संयोगो भवति तत्रैव सहृदयानां हृदयेषु रसो निष्पद्यते। रसः सहृदयगत धर्मोऽस्ति न तु काव्यगतः।

**काव्यभेदनिरूपणप्रसङ्गेऽपि** साम्प्रतिककाव्यरचनाप्रवृत्तिदृष्ट्या प्राक्प्रतिपादितानि लक्षणानि संशोध्य परिकल्प्य च प्रस्तुतानि। यथा हि नाटकलक्षणे वस्तुनेतृविषयकं किञ्चिद् अपूर्वमेव प्रस्तावितम्–

**धीरोदात्तो भवेन्नेता प्रतापैश्वर्यमण्डितः।**
**देवो भूपोऽथवा कश्चिद् गुणवांल्लोकनायकः।।३१।।**[1]

**नायकस्थापने यत्र लिङ्गभेदो न गण्यते।**
**महिलापि ततो नेता स्यादौदात्यमहीयसी।।३२।।**[2]

भूप एव नायको भवेदिति नावश्यकमिदानीम्। कश्चित् गुणवांल्लोकनायको यथा दयानन्दः विवेकानन्दः जवाहरलालोऽपि वा नायको भवितुमर्हति। अथवा महिमान्विता काचित् महिलाऽपि काव्यस्य नेतृपदे स्थापयितुमर्ह्या भवति। आधुनिककाव्यप्रवृत्तिमुद्वीक्ष्य इति वृत्तमपि किञ्चिद् विशिष्टमेव प्रतिपादितम्। यथा हि–

---

१. अभिराजयशोभूषणम्, पृ. २००
२. तत्रैव, पृ. २००

**राष्ट्रोदयं गुणैश्वर्यं लोकजीवनमङ्गलम्।**
**न्यायसत्यदयाधर्मसौजन्यादिसृतेर्जयम् ॥३४॥**

**स्थापयेन्नाटकं नूनं लक्ष्यीकृत्य यथोचितम्।**
**येन लोकस्सदाचारोच्छ्रितभार्गं समाश्रयेत्॥३५॥**[3]

राष्ट्रोदयपरं यथा मूलशंकरयाज्ञिकस्य छत्रपति–साम्राज्यं, गुणैश्वर्यपरं यथा श्रीधरभास्करवर्णेकरस्य विवेकानन्दचरितम्, लोकमङ्गलपरकं यथा श्रीगोपालशास्त्रिणः नारीजागरणम्, न्यायसत्यादिजयपरं यथा त्रिपाठीभास्कराचार्यस्य स्नेहसौवीरम्।

**एकाङ्क्याख्यं** नूत्नमेव प्रकल्पयस्त्येतेषाम्। उक्तं ह्येतेन–

**हिन्दीप्रभृतिभाषासु भारतीयासु साम्प्रतम्।**
**लघुनाट्यं यदेकाङ्कि सर्वाभीष्टं महीयते॥४०॥**

**देववाच्यपि तन्नूनं तद्वदेव प्रतिष्ठितम्।**
**नियन्त्रितं न तज्ज्ञेयमुपरूपकलक्षणैः॥४१॥**

**नायकोऽत्र भवेद्भूपः पण्डितः पामरोऽथवा।**
**दिव्योऽदिव्योऽथवाऽन्योऽपि शिक्षको भिक्षुको यतिः॥४२॥**

**योऽपि कश्चिद् भवेन्नेता पुरुषो महिलाऽपि वा।**
**यादृशञ्चापि वृत्तं स्यान्नाट्यकृत्प्रतिभाश्रितम्॥४३॥**[4]

**महाकाव्यम्**

महाकाव्यसन्दर्भेऽपि मिश्रवर्येण कृतं परिवर्तनं ग्राह्यमस्ति तन्मते उज्ज्वलचरितः कश्चित् सज्जना महीयसी पुरन्ध्री वापि महाकाव्यस्य नायिको भवितुमर्हति–

**सर्गबन्धो महाकाव्यं लोकवन्द्यजनाश्रयम्।**
**ख्यापयद् विश्वबन्धुत्व स्थापयद विश्वमङ्गलम्।**
**नाथकस्तत्र देवः स्यात्प्रजाबन्धुरथो नृपः।**
**चारुचर्योऽथवा कोऽपि सज्जनश्चरितोज्ज्वलः॥६७॥**

---

३. अभिराजयशोभूषणम्, पृ. २००
४. तत्रैव, पृ. २०३

**लोकोत्तरगुणादर्शः पुरुषो नायको भवेत्।**
**महीयसी पुरन्ध्री वा नाऽत्र कार्या विचारणा॥६८॥**

**लोकवन्द्यजनाश्रयं महाकाव्यं** यथा–

झांसीश्वरी–तिलक–गान्धि–जवाहर–दयानन्दादिसमाश्रितानि महाकाव्यानि

**विश्वभङ्गलाश्रयं महाकाव्यं** यथा–

वामनावतरणम्, उत्तरसीताचरितम्, भार्गवराघवीयम्

**महिलानायकं महाकाव्यं** यथा–

राधाचरितम्, जानकीजीवनम्, झांसीश्वरीचरितम्, उर्मिलीयम्।

**खण्डकाव्यम्–** खण्डकाव्यस्य लक्षणन्तु पूर्वाचार्याननुसृत्य एव कृतम्[१] परं खण्डकाव्यगतविषयान् अधिकृत्य विविधानि नामानि प्रदत्तानि। यथा दौत्यकर्मप्रसङ्गतः दूतकाव्यम्, अन्योक्तिनिष्ठया अन्यापदेशकाव्यम्। गीतितत्त्वप्रयोगत इदं गीतिकव्यमित्यपि व्यपदिश्यते।

एवमेव स्तोत्रकाव्यम्, प्रहेलिकाकाव्यम्, विमानकाव्यम्।

खण्डकाव्येषु लहर्याख्या नवा एव विधा परिकल्पिता–

यथा हि–

**लहरीकाव्यमप्येतत् खण्डकाव्यं समुच्यते।**
**प्रतिपाद्यं यदा काव्ये लहरीसन्निभं भवेत्॥**

**परस्परं समासक्ता लहर्यो जलधौ यथा।**
**भङ्गिव्रजं जनयन्तो यान्त्यद्वैतस्वरूपताम्॥**

**भक्तिशृङ्गारसन्दर्भाः काव्येऽन्येऽपि तथा यदा।**
**भिन्नाः सन्तोऽपि पुष्णन्ति मूलभावं पुनः पुनः।**
**लहरीसन्निभा भाषाविच्छित्तिं जनयन्ति च।**
**नयनाऽसेचनं भूरि वितन्वन्ति निरन्तरम्॥**

---

५. कस्यचित्पुरुषार्थस्य वर्णनन्तु यदांशिकम्।
जीवनस्याथवा नेतुः खण्डकाव्यं तदुच्यते।। ८१, पृ. २२३

**तदा तल्लहरीकाव्यं कोविदैर्विनिगद्यते॥**[६]

यथा– राधावल्लभत्रिपाठिनः लहरीदशकम्, सरयूलहरी च रामभद्राचार्यस्य।

आधुनिककाव्यप्रवृत्त्यनुकूलमेवास्य विविधभेदानां लक्षणं कृतं विशेषतयात्र लघुकथालक्षणं पर्यालोचनीयम् यतो हि साम्प्रतिके युगे लघुकथाविरचने कवीनामाग्रह विशेषः परिदृश्यते–

**नाति विस्तृतसन्दर्भा विद्युदुन्मेषसन्निभा।**
**नूनं लघुकथेयं स्यादेकपात्रावासायिनी॥**

**उल्कापिण्डसदृक्षाभा हृत्तन्त्रीझङ्कृतिक्षमा।**
**अल्पाक्षरा अल्पपात्रापि कथा लघ्वी महीयते॥**

**यथा चित्रपर्णी, एकादशी आदि लघुकथासंकलनानि।**

एवमेव कथानिका इति गद्यकाव्यभेदोऽपि सम्प्रति लोकप्रियोऽस्ति। तस्य लक्षणमपि प्रदत्तम्–

**गृहीत्वा किमप्युद्देश्यं लोकाभ्युदयकारकम्।**
**चित्रणेन चरित्राणां सरत्यग्रे कथानिका॥**

इयं लघ्वी दीर्घेति भेदेन द्विर्धेति भेदेन द्विधा भवति। यथा इक्षुगन्धा, उपाख्यानमालिका, श्वेतदूर्वा।

प्रकीर्णतत्त्वोन्मेषे आचार्यप्रवरैः साम्प्रतिके युगे विरच्यमानानि गीतितत्त्व–गलज्जलिका–छन्दोमुक्तका व्यप्रकरणानि उपन्यस्तानि। आचार्यमते गीतितत्त्वमेव काव्यस्य मूलतत्त्वं भवति–

**यच्च गीतिषु सामाख्येत्युक्तमासीत्पुरातनैः।**
**तेनैव गीतितत्त्वस्य महत्त्वं धुरि संस्थितम्।**

तदपि शास्त्रीयगीतं लोकगीतचेति द्विविधं भवति। पारसीकभाषासम्मते 'गजल' इति गीतभेदेऽपि विशिष्टादराः दृश्यन्ते कवयोद्यतने काले। 'गलज्जलिका' इति नाम्ना विविधा भेदाः कृताः। विस्तारभयादस्य विवरणमत्र न प्रदीयते।

---

६. अभिराजयशोभूषणम्, पृ. २३७

६. तत्रैव, पृ. २३५

# तन्त्रशास्त्राऽनुसारेण माधुर्यादिगुणव्यञ्जकवर्णानामाधारः

**डॉ. सच्चिदानन्द तिवारी**

साहित्यशास्त्रे माधुर्यादिगुणानां मम्मटादिभिराचार्यैर्यद् वर्णव्यञ्जकत्वं प्रतिपादितं वर्तते। कथं न तैः सर्वेषां वर्णानां माधुर्यादिगुणेषु व्यञ्जकत्वं प्रतिपादितं, वर्णानां विभागे किमपि रहस्यं वर्तते, यदर्थं गुणस्य व्यञ्जका वर्णाः पृथग् रूपेण निर्धारिताः सन्तिः, ओजोगुणस्य वर्णाः पृथग्रूपेण सन्ति, अतोऽधुना माधुर्यगुणस्य व्यञ्जकवर्णान् अभिधाय तेषां वर्णानामेव माधुर्यव्यञ्जकत्वे हेतुः प्रदर्श्यते।

तन्त्रशास्त्रस्य महिमा तन्त्रेषु प्राचीनकालतः दृश्यते। ये स्वरव्यञ्जनादयो वर्णाः सन्ति ते तन्त्रेषु मातृका इति नाम्ना व्यवह्रियन्ते, स्वराः, कवर्गचवर्गटवर्ग, तवर्गपवर्गयवर्गशवर्गाः एता अष्टा मातृकाः सन्ति, यासां देवताऽपि तन्त्र शास्त्रानुसारं पृथक्-पृथग् रूपेण विभक्ताः सन्ति। तेषां देवतानां स्वरूपमपि प्रदर्श्यमानक्रमाऽनुसारं विद्यते, स्वराणां कवर्गादीनां च स्वरूपवर्णदेवतादिनिर्धारणेन विना माधुर्यादिगुणानां वर्णव्यञ्जकत्वे हेतुप्रदर्शनमशक्यम्, अतोऽत्र सर्वप्रथमं कस्य कस्य गुणस्य के के वर्णा व्यञ्जकास्सन्ति तेषां वर्णानां स्वरूपम् कीदृशम्, तेषां मातृकापदवाच्यानां वर्णानां काः काः देवतास्सन्ति तेषां देवतानां किं किं स्वरूपम्, को वर्णः, का दिशा इति प्रदर्शनमन्तरा वर्णव्यञ्जकत्वे हेतु प्रतिपादनं न युक्तियुक्तम् यतोहि अज्ञातस्य ज्ञानं न भवति अतोऽत्र क्रमेण छन्दः शास्त्रतन्त्रशास्त्रमधिकृत्य गुणव्यञ्जकवर्णानां कारणं संक्षेपेण वक्ष्यते।

## छन्दःशास्त्रोक्तवर्णानां शुभाशुभत्वम्–

छन्दःशास्त्रे वर्णानां शुभाशुभत्वं निरूपितं विद्यते। मगणादिगणानां स्वरूपदेवताफलनिरूपणप्रसंगे निर्दिष्टं यत् काव्यनायकस्य तत्कर्तुः पठितुर्वा मगणादिगुणानां फलं सुविचार्य अवगन्तव्यम्। गुणशुद्धिप्रतिपादनपूर्वकं वर्णशुद्धिरपि निरूपिता वर्तते। वर्णशुद्धौ नायकादयः सुखमनुभवन्ति। च, ङ्, झ, ज, ट, ठ, ड, ढ, ण, प, फ, व, भ, ग, र, ल, घ, ष, ह, ल अक्षराणि तथा संयुक्ताक्षराणि विहाय अन्यान्यक्षराणि शुभफलप्रदानि भवन्ति।[१] इदमेव कारणं वर्तते यद् टकराद्या वर्गाः

१. अवर्णात्सम्पत्तिभर्वति मुदितवर्णाद्धनशता।
न्युवर्णादाख्यातिः सरभसमृवर्गाद्धनशता।
तथा ह्येच सौख्यं, ङ, न, ण रहितादक्षरगणात्।

ओजोगुणसमन्वितायां रचनायां वैशिष्ट्येन स्वीकृता:।

दु:खदारिद्रयवाचकानां शब्दानां प्रयोगस्य निषेधो भामहस्य काव्यालंकारेऽपि द्रष्टुं पार्यते। अस्मादवगम्यते यन्मनीषिभि: साहित्यशास्त्रे माधुर्योजोगुणव्यञ्जका वर्णा: पृथक्त्वेन प्रतिपादिता:।

**माधुर्यगुणव्यञ्जकवर्णा:-**

माधुर्यगुणस्य व्यञ्जकवर्णाऽभिधानसमये वाग्देवताऽवतारमम्मटेन काव्यप्रकाशे कथितं वर्तते यन्मूर्ध्नि वर्गान्त्यगा: क, च, त, प, रूपा: एवं च अन्त्यगा: ङ, ञ, ण, न, म, रूपा: एवं च स्पर्शवर्णा: (कादयो मानवसाना: स्पर्शा:)[२] अर्थात् क वर्गत: म पर्यन्तं ये वर्णा: सन्ति ते स्पर्शसंज्ञाका भवन्ति। ते स्पर्शवर्णा अपि माधुर्यगुणे व्यंजकतामियन्ति। यथा अङ्ग, सङ्ग, गुञ्ज, कुञ्ज, इत्यादिरूपेण टवर्गाक्षराणि विहाय, ह्रस्वकारणकारसंयुक्ताक्षराणि समासेन मध्यमसमासेन युक्ता रचना माधुर्यगुणव्यञ्जकेषु वर्णेषु कारणत्वेन वर्तन्ते।[३] अनेनैव प्रकारेण विश्वनाथेनाऽपि साहित्यदर्पणे माधुर्यगुणव्यंजका वर्णा: प्रतिपादिता: तत्र अवृत्ति, अल्पवृत्तिर्वा इतिलिखितं वर्तते, अर्थात् समासाऽभाव: अल्पसमास:, द्वित्रिचतु:पदैर्युक्त: स्यात्, काव्यप्रकाशकारेण अवृत्तिर्मध्यवृत्तिर्वा इति लिखितं वर्तते। साहित्यदर्पणे मध्य इत्यस्य स्थाने अल्प इति शब्द: प्रयुक्तो वर्तते।[४]

**माधुर्यगुणव्यञ्जकवर्णानामाधार:-**

माधुर्यगुणे ये व्यंजकवर्णा: सन्ति तेषां वर्णानां "स्वच्छन्दोद्योत", "वमाकेश्वरीमतम्" तथा योगीनीहृदयाऽनुसारं अधिष्ठात्रीदेवता: क्रमेण एवं प्रकारेण वर्तन्ते।[५]

| | | | | |
|---|---|---|---|---|
| कवर्गस्य- | ब्राह्मी | कामेश्वरी | माहेश्वरी | आग्नेयम् |
| चवर्गस्य- | माहेश्वरी | मोदिनी | ऐन्द्री | ईशानम् |

---

पदादौ विन्यसात् भ, र, व, ह, ल, हा, हा, विरहितात्।
क: खो गो घश्च लक्ष्मीं वितरति, वियशा ङ स्तथा च:सुखं छ:।
प्रीतिं यो मित्रलाभं मयमरणकरो झञौ, टठौ खेद दु:खे।
ड: शोभां ढो विशोभां भ्रमणमथ चणहत: सुखं यश्च युद्धं।
दोध: सौख्यं मुदं न: सुखमयमरणक्लेशदु:खापवर्ग:।।
वृत्तरत्नाकर-भट्टीव्याख्यासहित:। १/६-७.

२. लघुसिद्धान्तकौमुदी संज्ञाप्रकरणम्।

३. मूर्ध्निवर्गान्त्यगा: स्पर्शा अटवर्गा रणौ लघू।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा।। का.प्र. ८/७४.

४. मुर्ध्नि वर्गान्त्यगा: स्पर्शा अटवर्गा रणौ लघू।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा।। का.प्र. ८/७४.

५. सा.द. ६/३

| | | | | |
|---|---|---|---|---|
| टवर्गस्य- | कौमारी | विमला | कौमारी | उत्तरम् |
| तवर्गस्य- | वैष्णवी | अरुणा | वैष्णवी | दक्षिणा |
| पवर्गस्य- | वाराही | जयिनी | वाराही | पश्चिमा[६] |

अत्र कवर्गस्य अधिष्ठात्र्या देवतायाः कमलापत्रसदृशी कान्तिः दिव्याभरणैर्युक्तं ब्राह्मी स्वरूपं वर्तते, एतदर्थं पद्मसदृशकान्तित्वाद् दिव्यालंकारैरलंकृतत्वात् कवर्गवर्णा माधुर्यगुणव्यञ्जकतायां समुपन्यस्ताः। शंखगोदुग्धवन्महेत्तेजो युक्तायाः कवर्गस्य अधिष्ठात्रीदेवताया माहेश्वर्याः स्वरूपं विद्यते इति हेतोः चवर्गा माधुर्यगुणस्य व्यंजकत्वेन कथिताः।

टवर्गाक्षरेषु माधुर्यगुणे णकारस्य ग्रहणं भवति, अन्येषां चतुर्णां वर्णानां निषेधोस्ति अकोमलत्वात्, ण-इत्यस्य वर्णस्य अधिष्ठात्रीदेवता कौमारी वर्तते पद्मगर्भसदृशकान्तित्वात्, हारकेयूरभूषितत्वान्माधुर्यगुण-व्यञ्जकवर्णेषु णकारस्यप्रयोगः कृतः।

हारकुण्डलमण्डिता, स्निग्धनीलकमलसदृशकान्तियुक्ता तवर्ग-स्याऽधिष्ठात्री देवता वैष्णवी राजते, वैष्णव्याः सौम्यदर्शनस्याकृतिः, अत्यन्ता रुचिकरा भवति, अतएव तवर्गवर्णा माधुर्यगुणस्य व्यञ्जकाः सन्ति।

नीलजलदवत् कान्तियुक्ता, सर्वाऽभरणभूषिता पवर्गस्याधिष्ठात्री देवता वाराही वर्तते, वाराही पश्चिमस्यां दिशि निवसति, अस्यामेव दिशि दशदिक्पालेषु जलस्याधिष्ठात्री देवता वरुणो निवसति। जलेऽपि माधुर्यं भवति। अत एव तवर्ग वर्णाः माधुर्यगुणस्य व्यञ्जकास्सन्ति।

यवर्गेषु रकार आगच्छति, हारकुण्डलमण्डिता शंखकुन्देन्दुधवला यवर्गस्याऽधिष्ठात्री देवता ऐन्द्री वर्तते। ऐन्द्रीदेवताया पूर्वदिशा वर्तते। पूर्वदिक् पतिः इन्द्रो वर्तते। असौ यथा वृष्टिवर्षणेन लोकान् प्रीणाति, तथैव रकारोऽपि स्वभावतो माधुर्यगुणव्यञ्जको भवति। एवं प्रकारेण कवर्गादारभ्य शकारपर्यन्तं सप्तमातृकाः सन्ति, यासां पूजनं वेदसमयादारभ्य भवति। अधुनाऽपि आसां सप्तमातृकाणां मांगलिकहोमादिकृत्येषु अर्चनं भवति। आभ्यो मातृभ्यः समग्रं जगत् (शास्त्रमयं जगत्) व्याप्तं वर्तते। एतदुक्तामातृकाणां माधुर्यगुणे कारणत्वं स्वच्छन्दोद्योतस्य दशमपटलाऽनुसारं प्रतिपादितम्।

सम्प्रति मातृकाणां किं स्वरूपम्, को वर्णः, येन माधुर्यगुणे एषां व्यंजकता स्पष्टरूपेण अवभासयेदिति। यद्यपि मातृकावर्णानां तन्त्रेष्वधिकं महत्वं वर्तते वर्णानां स्वरूपविविधार्थवर्णविषये

---

६. स्वच्छन्दोद्योत, प्रथमपटले
वामकेश्वरीमतम्, प्रथमपटले
योगिनीहृदयम् द्वितीयपटले
द्रष्टव्य-मन्त्र और मातृकाओं का रहस्य पृ. १०० तः १०६ पर्यन्तम्।

अतीवविस्तृतं विवेचनं लभ्यते। अत्र निबन्धे विषयान्तरशंकया तत्सर्वं न लिख्यते। अतोऽत्र संक्षेपेणैव मातृकावर्णानां स्वरूपवर्णविषये प्रतिपाद्यमाधुर्यव्यञ्जकवर्णाः तत्राऽनुसारं प्रदर्श्यन्ते।

कदम्बकोरकाकारो रत्नांगदकेयूरकंकनैः शोभितः पुष्पहारैरत्नंकृतो जपापुष्पसिन्दूरसदृशोभायुक्तो वर्तते। इदमेवकारणं यत् एतावद् भूषणैरलंकृतः वकारो माधुर्यगुणस्य व्यंजकः। यथा देवेषु सर्वप्रथमं ब्रह्मणो नाम उच्चार्यते तथैव व्यंञ्जनवर्णेषु वकारः सर्वप्रथमं–ब्रह्मणः प्रातिनिध्यं करोति।[७] यथा बृहद्वाचस्पत्ये एकैव कवर्णस्य अनेकार्थाः सन्ति, अन्येषां वर्णानां अर्थप्रतिपादनंन्त्वत्र दुष्करमेव।[८] प्रायेण कवर्गादारभ्य क्षकारपर्यन्तं सर्वे वर्णाः कुण्डलीत्रयसंयुक्ताः, शक्तित्रयविशिष्टाः सामान्यतः सर्वशक्त्यात्मकाश्च सन्ति, एवं च पंचदेवमयाः पञ्चप्राणात्मका वर्तन्ते समयाऽनुसारं शुभाऽशुभफलप्रदायकाः एते वर्णाः भवन्ति।

| | | | |
|---|---|---|---|
| खकारः | शंखकुन्दसदृशः | गकारः | अरुणादित्यसदृशः |
| धकारः | तरुणादित्यसदृशः | ङ्कारः | सर्वदेवमयः |
| चकारः | रक्तविद्युत्सदृशः | छकारः | पीतविद्युत्सदृशः |
| जकारः | शरच्चन्द्रसदृशः | झकारः | रक्तविद्युत्सदृशः |
| ञकारः | रक्तविद्युतलतातुल्यः | णकारः | पीतविद्युल्लताकारः |
| तकारः | पीतविद्युतसदृशः | थकारः | तरुणादित्यसदृशकान्तियुक्तः |
| कान्तियुक्त | | | |
| दकारः | रक्तविद्युतल्लताकारः | पकारः | शरच्चन्द्रतुल्यकान्तियुक्तः |
| फकारः | रक्तविद्युतसदृशः | वकारः | शरच्चन्द्रोपमः |

७. कामधेनुतन्त्रे– चतुर्थ पञ्चम पटले।

८. कः क्रोधीशो महाकाली कामदेवः प्रकाशकः।
कपाली तेजसः कान्तिर्वासुदेवो जयानलः।।
चक्री प्रजापतिः सृष्टिर्दक्षस्कन्धो विशाम्पतिः। अनन्तः पार्थिवो बिन्दुस्तपिनो
परमात्मकाः। वर्गाद्यश्य मुखी ब्रह्मा वर्णाथोऽम्भः शिवाजलम्। माहेश्वरी तुला
पुष्यं मंगलाश्चरणाकरः। नित्या कामेश्वरी मुख्या कामरूपो गजेन्द्रकः।
श्रीपुररमणो रंगः कुसुमापरमार्थकः। कै शब्दे, कच् दीप्तौ, ब्रह्मणि, विष्णौ कामदेवे, अग्नौ, वायौ, यमे, सूर्ये, आत्मनि, दक्षे, प्रजापतौ, राजनि कामग्रन्थै, मयूरे, इति तु मेदिनीं काशे स्पष्टं वर्तते। विहगे शब्दचित्रे चित्ते, देहे, काले, धनेमेधे, शब्दे, अनेकार्थबोधे प्रकाशे च इतितु कशब्दवाचका अर्था एकाक्षरकोशे प्रतिपादितास्सन्ति कः प्रजापतिः यस्मात् पितामहो भूतः प्रभुरेकः प्रजापतिः ब्रह्मासुरगुरुस्थानुर्मनुः कः परमेष्ठयः। वाचस्पत्यम् तृतीयो भागः पृ. १६०१ तः १६०२ पर्यन्तम्।

भकारः त्रिशक्तियुक्तः मकारः तरुणादित्यसदृशः

रकारः रक्तविद्युत्सदृशः

एवं प्रकारेण माधुर्यगुणव्यंजकवर्णानां शुक्लादयो वर्णाः (रागाः) सन्तिः[९], उपर्युक्तानां सर्वेषां कवर्गादीनां शुक्लादयो वर्णाः, पीतरक्तशरच्चन्द्रसदृशाः सन्ति, लोकेऽपि एते वर्णाः सर्वेषामनुजानां चेतांसि हरन्ति, माधुर्यगुणयुक्ता रचनाऽपि सर्वेषां हृदयं मुष्णाति एतदर्थम् एते वर्णा माधुर्यगुणस्य व्यंजकाः सन्ति। "मातृका-विवेके" सौभाग्यभास्करे तु मातृकाणां वर्णा भिन्नप्रकारेणैव कथिताः। वास्तविकरूपेण सर्वे वर्णाः त्रिशक्तिरूपाः सन्ति। सर्वस्य वर्णस्य शक्तयः। घोरघोरतरअधोरूपेण त्रिधा विभाजिताः सन्ति।

यदा कामक्रोधादीनां विस्तारं कुर्वन्त्यः शक्तयः भोगापवर्गात्मकमिश्रितकर्मफलेषु मनुष्यः आसक्तो भवति, तदा आसां शक्तीनां घोरलक्षणं भवति। अस्यां दशायां ओजोगुणाऽनुसारिणी रचना जायते, उद्धतरचनायां प्रायः कामक्रोधादीनामेव विस्तारो भवति येनेयं रचना ओजोगुणाऽनुसारिणी वीरवीभत्सरौद्ररसेषु वर्तते, इमाः शक्तयो विषयासक्तचित्तानि मनुष्यान् नीचातिनीचकार्ये यथा पातयन्ति तदा एता अधोरतरा उच्यन्ते, अस्यामवस्थायामपि रचनायामोजोगुणस्येव साम्राज्यं वरीवर्ति। सर्वज्ञतादशायां यदाशक्तयः शिवताप्रदायिन्यो भवन्ति, तदा इमा अघोरशब्देनोच्यन्ते। अस्यां दशायां रचना माधुर्यगुणयुक्ता प्रसादगुणयुक्ता च भवति यतोहि माधुर्यप्रसादगुणौ पाठकानां श्रौतृणां कृते अत्यन्तरूचिकरौ भवतः। अत्यन्तानन्दसौख्यरूपिशिवतामयत्वात्।[१०] शिवसूत्रवार्तिके तु ज्ञानस्य परापरभेदेन द्वैविध्यं प्रतिपादितं वर्तते।[११] अचार्यक्षेमराजेण परपरापरापरभेदेन ज्ञानं त्रिविधं कथितं, यज्ज्ञानं क्रमेण अघोर (पर)[१२] घोर (परापर) घोरतर (पर) नाम्ना कथ्यते। अनेन एतत् ज्ञायते यत् सर्वे वर्णाः स्वशक्तीनां प्रभावात् सर्वत्र रचनायां प्रयोजयितुं योग्याः सन्ति, परं वर्णदेवतास्वरूपादिभेदेन सर्वत्र एषां प्रयोगो न जायते।

**ओजोगुणव्यञ्जकवर्णाः–**

आचार्यमम्मटेन विश्वनाथेन च काव्यप्रकाशे तथा साहित्यदर्पणे ओजोगुणव्यञ्जकाः वर्णा एवं प्रकारेण कथिताः।[१३]

---

९. कामधेनुतन्त्रम् चतुर्थपञ्चमषष्ठपटलानि। द्रष्टव्य-मन्त्रमातृकाओं का रहस्य पृ. ११४-१२५

१०. शिवसूत्रवार्तिक, तृतीयप्रकाश सूत्र १९.

११. ज्ञानस्यैव द्विरूपस्य परापरविभेदतः तत्रैव. १/४.

१२. स्पन्द सन्दोह पृ. २१ द्रष्टव्य-मन्त्रमात्रिकाओं का रहस्य पृ. १०३-१०४.

१३. योग आद्यस्तृतीयायामन्त्ययोः रेणुतुल्ययोः। टादि शषौ वृत्तिदैर्ध्यं गुम्फ उद्धत ओजसि। का.प्र. ८/४५. वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्यधौ द्वयोर्वा सरेफौ टठडढैः सह शकारश्च खकारश्च तस्य व्यञ्जकतां गताः। तथा समासबहुलो घटनौद्धत्यशालिनी। सा.द. ८/५-६.

वर्गाणां प्रथमतृतीयारक्षराणां यत्र प्रयोगः स्यात् वर्गाणां प्रथमतृतीयौ अन्त्यौ–द्वितीय–चतुर्थौ यत्र परस्परं सम्पृक्तौ स्याताम् एवं च रकारस्य केनाप्यक्षरेण सह उपर्यधः कुत्रचिदपि, वर्षाद्रिद्रुमवक्त्रवज्रादिरूपेण प्रयोगः स्यात्, तुल्यवर्णयोः तकार–चकार–जकार–तकारादीनां, वित्तचित्तोच्च, जगज्जात, उद्दाम इत्यादिरूपेण यत्र प्रयोगः स्यात् ट,ठ,ड,ढ वर्णौ एवं श,ष, वर्णैयुक्ता दीर्घसमासैश्च यत्र उद्धता रचना भवति, तत्र ओजोगुणो दीप्यते अथवा उक्तप्रकारेण ओजोगुणयुक्तां रचनां कविः कुर्यात्। समुदीरिता वर्णा ओजगुणस्य व्यञ्जका सन्ति। अस्य गुणस्य, क्रमेण वीरवीभत्सरौद्ररसेषु आधिक्यं आधिक्यं भवति।

अस्मिन् चित्तस्य विस्तारो भवति अर्थात् वीरादिरसेषु चित्तविस्तारस्य हेतुभूता दीप्तिः–ओज इति नाम्ना कथ्यते। चित्तस्य विस्ताररूपदीप्तत्वजनकत्वम्ओजस्त्वम्।

**ओजोगुणव्यञ्जकवर्णानामाधारः–**

ओजोगुणस्य व्यंजकवर्णानामधिष्ठातृदेवताः "स्वच्छन्दोद्योत" "वामकेश्वरीमतम्" एवं योगिनीहृदयाऽनुसारम्–एवंप्रकारेण सन्ति।

| | | | | स्वच्छन्दो. | वामके. | योगिनीह. |
|---|---|---|---|---|---|---|
| णकारं | विहाय | टवर्गाः | | कौमारी | विमला | कौमारी |
| प्र. | तृ. | द्वि. | च. | | | |
| क | ग | ख | घ | ब्राह्मी | कामेश्वरी | माहेश्वरी |
| च | ज | छ | झ | माहेश्वरी | मोदिनी | ऐन्द्री |
| त | द | थ | ध | वैष्णवी | अरुणा | वैष्णवी |
| प | ब | फ | भ | वाराही | जयिनी | वाराही |
| | | र | | ऐन्द्री | सर्वेश्वरी | चामुण्डा |
| | | श | ष | चामुण्डा | कौलिनी | महालक्ष्मी |

योगिनीहृदयदीपिकाऽनुसारं माहेश्वर्यादीनां स्वरूपं प्रदर्शयन् शारदातिलकतन्त्रस्य पदार्थादर्श–टीकाऽनुसारं ओजोव्यञ्जकवर्णानां स्वरूपप्रदर्शनपुरस्सरं तथा शुक्लादिवर्णत्वकथनपूर्वकं ओजोगुण–व्यंजकतायामाधार उच्यते।

णकारं विहाय ट, ठ, ड, ढ, वर्णानां अधिष्ठात्रीदेवता पीतवर्णयुक्ता शक्तितोमरधारिणी वरदाभयहस्ता कौमारी वर्तते।

द्विवाहुयुक्तः क्रौञ्चवाहनो महाध्वनियुक्तष्टकारो वर्तते, अस्य अधिष्ठाता देवोऽपि शक्तितोमरधारी वर्तते। अत ओजगुणव्यंजने टकारस्य प्रयोगः समुचितमेव। ओजोगुणेऽपि महाध्वनयो भवन्ति, ओजोगुणयुक्तरचनायां वक्ताऽपि तोमरादिशक्तिभिरलंकृतो दृश्यते।

धरापद्मगजेन्द्रस्थितो द्विभुजो विषनाशो लक्ष्ययोजनशरीरपरिमितः उज्ज्वलर्णयुक्तः ठकारो विद्यते, विषनाशनादिविशेषणत्वात् ठकारस्याऽपि ओजोगुणस्य व्यंजकता समुचितेव।

अष्टबाहुयुक्तश्चतुर्मुखः श्वेतकमलासनः सहस्त्रयोजनविस्तीर्णोऽलंकृतशरीरो डकारो वर्तते। अष्टबाह्वादिविशेषणैर्विशिष्टत्वाद् डकारः ओजगुणव्यंजकत्वे कारणतां गतः।

अग्निबिम्बस्थोऽजवाहनो दशबाहुयुक्तो ज्लकत्वकान्तियुक्तो ढकारः ओजोगुण व्यञ्जकतायां परमावश्यकः।

क, ग, ख, घ, वर्णानां त्रिनेत्रा, श्वेतवर्णा, शूलधारिणी, कपालमृगपरशुं दधाना माहेश्वरी अधिष्ठात्री देवता वर्तते।

गजवाहनः, शुक्लवज्रकरः सहस्त्रद्वययोजनपरिमितो भूबिम्बगतनवकुंकुमवर्णः तकारो वर्तते। गजवाहनत्वात्, शुक्लवज्रकरत्वात् उक्तविशेषणैर्विशिष्टा माहेश्वरी देवतात्वात्तकार ओजोगुणव्यंजकः।

पाशांकुशधारणशीलस्य, सर्पवाहनस्य, सर्पभूषणस्य, शतयोजनपरिमितशरीरस्य गकारस्य, हस्ते पाशतोमरयुक्तस्य, मेषवाहनस्य कृष्णवर्णस्य भीषणस्य सहस्त्रयोजनदीर्घशरीरस्य खकारस्य।

उष्ट्रवाहनस्य, गदावज्रधारणशीलस्य द्विमुखस्य सहस्त्रयोजनपरिमितशरीरस्य कृष्णवर्णस्य घकारस्य ओजोगुणप्रतिपादने वर्णव्यञ्जकता युक्ता।

च, ज, छ, झ, वर्णानां देवता श्यामवर्णा, वज्रोत्पलधारिणी ऐन्द्री वर्तते। चकारः– युगाग्रपद्मसंस्थितः चतुर्वाहुः कपर्दिकैर्विभूषितः सुगन्धाढ्यः, कोटियोजनविस्तीर्ण श्वेतवर्णयुक्तो विद्यते।

जकारः–श्वेतवर्णश्चतुर्बाहुकौटियोजनमितः।

छकारः–कोटियोजनविस्तीर्णः पद्पस्थितः चतुर्वाहुयुक्तः।

झकारोः–ऐन्द्री चतुर्बाहुः, कौटियोजनमितः श्वेतवर्णः। ऐन्द्रीदेवतायाः श्यामवर्णत्वात् वज्रोत्पलधार्यमाणत्वात्–ओजोगुणव्यंजकः वर्तते। त, द, थ, ध एषां वर्णानां दिव्यभूषणभूषिता श्यामवर्णा, हस्तेपदमं विभ्राणा, शंखचक्रं दधाना वरदा, अभयदा, वैष्णवी वर्तते। गन्धाढ्यः सहस्त्रयोजनविस्तीर्णः, कुंकुमवर्णसदृशः तकारों द्विभुजः, षण्मुखः कोटियोजनमितो महिषवाहनो दकारः वृषारूढो, भयंकरः अष्टबाहुः चतुर्मुखः पीतवर्णः थकारः, सिंहवाहनः, चतुर्बाहुः, चतुर्लक्ष्यायोजनपरिमितो धकारः एते चत्वारो वर्णा भयंकरत्वादिविशेषणैर्विशिष्टत्वाद् ओजोगुणव्यंजका भवन्तीति।

प, व, फ, भ, ओजोगुणव्यंजकवर्णानां श्यामलकान्तियुक्ता, वज्र–चक्र–हल–मुशल–खड्गखेटकधारिणी अधिष्ठात्री देवता वाराही वर्तते। विंशातिवाहुः, दशमुखा कोटिमाना वकवाहनत्वात् पकारः, द्विबाहुयुक्तः षण्मुखः, दशोकोटियोजनमितः, नीलोत्पलस्थो हंसवाहनः पुष्टिप्रदोऽरूणवर्णयुक्तो

वकार:।

द्विबाहुयुक्त:, चंचल: सिंहस्थ:, दशकोटियोजनमित: श्वेतवर्ण:पकार: धूम्रवर्ण: त्रिहस्त:, त्रिमुखो व्याघ्रवाहनो भीषणाकृतिर्महाबली, दशलक्षयोजनविस्तीर्णो धूम्रवर्णो एतेवर्णा: स्वाधिष्ठात्र्या देवताया वैष्णव्या: सार्धमोजोगुणस्यव्यंजकतां गता:।

रकारस्य अधिष्ठात्री देवता चामुंडा वर्तते, या कृष्णवर्णा, दक्षिणकरे शूलं, डमरूं, खड्गं, वेतालकं च धारयति, वामकरे, नागं, खेटकं, कपालं, घण्टां च धारयति।

त्रिकोणाम्बुजयुक्त: रकार: मेषवाहन: चतुर्बाहुर्वर्तते। अयमपि ओजगुण व्यंजको वर्तते। स्वाधिष्ठात्र्या देवताया: चामुंडाया: स्वरूपत्वात्। (रकारोऽग्ने-र्बीजं वर्तते)।

श, ष अनयोर्द्वयोर्वर्णयोर्मातुलुंगफलधारणकर्त्री महालक्ष्मी अधिष्ठात्री विद्यते। हेमवर्णयुक्ता, कमलासनसंस्थिता, द्विभुजयुक्ता शकार: कृष्णवर्णयुक्त: सहस्त्रयोजनमित: द्विभुजयुक्त: षकार: ओजोगुणव्यञ्जक: प्रतिपादित:[१४] वर्णानां विषये, मेदिनीकोशे एकाक्षरकोशे वाचस्पत्ये च, शब्दकल्पद्रुमादिग्रन्थेष्वपि भिन्न-भिन्नप्रकारेण बहुविधं प्रतिपादितं वर्तते परं प्रकृतनिबन्धस्याऽनुपयोगाच्च तेषां विस्तृतविवेचनं न युक्तम्, अतोऽत्र संक्षेपेण, माधुर्यौजोगुणव्यञ्जकवर्णानामाधारो यथामति प्रतिपादित:।

प्रसादगुणव्यञ्जकवर्णा: पृथग् रूपेण आचार्यमम्मटेन विश्वनाथेन च न प्रतिपादित: प्रसादगुणवर्णनाऽवसरे विश्वनाथेन साहित्यदर्पणे कथितं यत् येन शब्देन श्रवणसमनन्तरमेव, अथवा समासेन रचनाया वा झटित्यर्थाऽवगति: स्यात्, एवं विधा: शब्दा: समासा: रचनाश्च प्रसादगुणस्य व्यञ्जका: सन्ति।[१५] आचार्यमम्मटेनाऽपि कथितं सर्वेषां रसानां सर्वासां रचनानां च साधारणधर्म: प्रसादगुणो भवति, रचनायामल्पसमासे, समासाभावे च सुकुमारकोमलशब्दानां व्यंग्यत्वे प्रसादाख्यो गणो जायते। (श्रुतिमाधुर्ये अकोमलशब्दव्यंग्यत्वेऽपि माधुर्य गुणो) लक्ष्यते। "उद्धतरचनायां" विकटार्थव्यंग्यत्वे शब्दे-ओजो गुणो राजते एतदेवैषां गुणनामन्तरम्।[१६-१७]

---

१४. योगिनीहृदयम् द्वितीयपटले। शारदा तिलकतन्त्रपदार्थदर्शाटीका पृ. ६०-६१. द्रष्टव्य मन्त्रमातृकाओं का रहस्य, पृ. १२६ त: पर्यन्तम्।

१५. शब्दस्तद्व्यञ्जका अर्थबोधका: श्रुतिमात्रत:। सा.द. ८/८
साधारण: समग्राणां स प्रसादो गुणो मत:।। का. प्र. ८/७६.

१६. द्रष्टव्य-वाचस्पत्यम्, बृहत्संस्कृताभिधानम्।
तृतीयो भाग:-पृ. १६०१ त: १६०२ पर्यन्तम्।
चतुर्थो भाग:-पृ. २७७८ त: ३४०३ पर्यन्तम्।
पंचमो भाग:-
षष्ठोभाग: पृ. ४५४९ त: ५१७३-७४ पर्यन्तम्।

१७. प्रो. वी.एम. शास्त्री की पुस्तक से।

# पण्डितराजमते रसनिष्पत्तिप्रकारः

**डॉ. शशिमौलिथापाण्डेयः**

काव्यं कान्तेव सरसतापादनेनाभिमुखीकृत्योपदेशं ग्राहयतीति स्वीक्रियते। अत्र सरसतापादनं नाम सरसीकरणम् तच्च रसोत्पत्या भवति। अतो रसनिष्पत्तिविषये बहुचिन्तितं साहित्यशास्त्रे। अस्माभिस्त्वस्मिन् निबन्धे पण्डितराजमतमेव समीक्ष्यते रसनिष्पत्तिविषयकम्।

शकुन्तलादिगतदुष्यन्तरमणीयत्वादिधर्माणां विगलनं साधारणीकरणे स्वीक्रियमाणं वर्तते परम्परायां किन्तु अन्तःकरणस्य परिमितप्रमातृत्वादिधर्मप्रमोषः पण्डितराजैः नूतनरूपेण प्रस्तूयते। इत्थं हि तेषां वाक्यांशो वर्तते। तत्कालनिवर्तितानन्दांशावरणाज्ञानेनात एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः इति। एतस्य वाक्यस्यार्थज्ञानाय प्रमातृत्वादिपदार्था निरूप्यन्ते।

अन्तःकरणावच्छिन्नं चैतन्यं प्रमाता उच्यते। प्रमातरि च प्रमातृत्वधर्मस्तिष्ठति। अन्तःकरणसम्बन्धं विना प्रमातृत्वं नैव भवति, तस्य आत्मरूपत्वेन निर्धर्मकत्वात्। अद्वैतवेदान्ते आत्मा निर्धर्मकः स्वीक्रियते। अन्तःकरणतादात्म्याध्यासेन तत्र कर्तृत्वादिधर्मा भासन्ते। रसगंगाधरे परिमितप्रमातृत्वस्य मोष उच्यते रसनिष्पत्तौ। अतः अवस्थाद्वयी अन्तःकरणस्योक्ता भवति– (१) घटादिपदार्थानां ज्ञानकाले परिमितप्रमातृत्वविशिष्टा, (२) तद्रहिता च योगिनां योग–प्रदो प्रप्राप्तौ। परिमितप्रमातृत्वं प्रमाणादिपरिच्छिन्नस्य प्रमातृत्वमुच्यते। अस्वतन्त्रं बहिर्मनः इति स्वीकारेण बाह्यवस्तूनां साक्षात्कारेऽन्तःकरणं बाह्येन्द्रियाणां साहाय्यमन्तरा न समर्थं भवति। अत एव वेदान्तपरिभाषायाम् अन्तःकरणस्येन्द्रियप्रणलिकया बहिर्निर्गमनं प्रतिपाद्यते। इन्द्रियाणि प्रमाणानि, अनुमानमपि प्रमाणम्, शब्दोऽपि प्रमाणभूतः, एभिरन्तःकरणस्य वृत्तयो जन्यन्ते। किन्तु वर्तते तत्र विशेषः इन्द्रियाणि प्रत्यक्षात्मकं ज्ञानं वृत्तिरूपं जनयन्ति, अनुमानादयस्तु परोक्षंज्ञानं वृत्तिरूपं जनयन्ति। एभिरेव प्रमाणैः जाग्रदवस्थायां ज्ञानानि व्यवहारोपयोगीनि जन्यन्ते। इन्द्रियानुमानादिभिः सहकृतम् अन्तःकरणं परिमितानां प्रमाणैः परिच्छिन्नानामेव घटपटादीनां ज्ञानं जनयति। अतः परिमितानां प्रमापकत्वात् इदानीन्तनप्रमातृत्वं परिमितप्रमातृत्वमुच्यते परिमितानां प्रमाणादिभिः परिच्छन्नानां प्रमातृत्वम् हि एतत्। अत्र प्रमाणप्रवृत्तिः क्रमेण भवति। क्रमेण ज्ञानस्यानुभवात्। नहि सर्वाणि घटपटादि–पदार्थानां ज्ञानानि एकदा अनुभूयन्ते। घटादीनां क्रमशो बोधविषये– 'अयौगपद्याज्ज्ञानानां

तस्याणुत्वमिहेष्यते' इति न्यायसिद्धान्तमुक्तावलीकारिकाऽपि प्रमाणभूता वर्तते। योगिप्रत्यक्षे तु एतस्माद् भिन्ना स्थितिर्भवति। योगिनां सर्वविषयकं ज्ञानं क्रमानपेक्षया भवत्यतस्तदानीमपरिमितं प्रमातृत्वं वक्तुं शक्यते। प्रमाणानि च योगिप्रत्यक्षे न व्याप्रियन्ते तेषां परिमितसन्निकृष्टग्राहकत्वात्। योगिनां प्रत्यक्षन्तु अलौकिकं प्रत्यक्षमुच्यते। किन्त्वस्माकं घटादिव्यवहारकालिकं प्रमातृत्वम्-प्रमातृत्वं भवति। एतच्च परिमितप्रमातृत्वमुच्यते। एतस्यैव प्रमातृत्वस्य मोषः स्वीक्रियते ग्रन्थकारैः। एतादृशस्य प्रमातृत्वस्य मोषे तु अन्तःकरणस्य व्यवहारातीताऽवस्था भवति।

अस्यामवस्थायां रसानुभूतिर्भवति। अत एव विगलितवेद्यान्तरमानन्दं काव्यं करोतीत्युच्यते काव्यप्रकाशे। रासानुभूतेश्च योगिनां सविकल्पकप्रत्यक्षसदृशत्वमुच्यते। अतः विषयस्य स्पष्टतायाः कृते योगिनां प्रज्ञालोकः योगिप्रत्यक्षत्वेन प्रसिद्धः योगशास्त्रसम्मतः प्रस्तूयते। 'निर्विचारवैशारद्येऽध्यात्मप्रासादः' (१.४७) इति सूत्रे योगभाष्ये योगिनां प्रज्ञाविषये एवमुच्यते-यदि निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादो भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोक इति। अत्र प्रज्ञालोकः प्रज्ञारूप आलोक उच्यते। एतस्य च विशेषणरूपेण अध्यात्मप्रसादः, भूतार्थविषयः, क्रमाननुरोधी, स्फुटः इति शब्दचतुष्टयमुपादीयते। येषां व्यावर्तकत्वविचारेण प्रज्ञायाः स्वरूपं निर्णीतं भवति। अत्र भूतार्थविषय इति कथनेन अस्मिन् साक्षात्कारे वस्तुनः स्वरूपमात्रमपेक्ष्यते न तु इन्द्रियादिप्रमाणानामपेक्षा वर्तत इति गम्यते। इयमेव प्रमाणाद्यनपेक्षा रसानुभूतौ परिमितप्रमातृत्वस्य प्रमोषेण सूच्यते। अयमलौकिकः साक्षात्कारो भवति लौकिकसाधनानामिन्द्रिय-सन्निकर्षादीनामत्रोपयोगाभावात्, भूतभविष्यवर्तमानानां साक्षात्करणेन विषयापेक्षाभावाच्च। प्रज्ञालोकलक्षणे क्रमाननुरोधीत्यनेन[१] प्रमाणादीनां व्यपेक्षा सर्वथा निराकृता भवति। केवलेन हि प्रज्ञालोकेन वस्तूनां प्रकाशने वस्तुजातं समग्रमेकदैव प्रकाशते। प्रमाणादीनां सहकारित्वे भवति क्रमः, सर्वैः सह प्रमाणानां सम्बन्धाभावे अन्तःकरणस्याऽपि सम्बन्धाभावात्। असन्निकर्षदशायां च ज्ञानाभावात्।

स्फुट इति कथनेन अस्मिन् प्रज्ञालोके भासमानानां वस्तूनां संशयाक्रान्तता न भवति। प्रमाणादिभिः भासने भवति तथा शुक्तौ रजतादिभानस्य भ्रमरूपस्यानुभवात्। योगिनामयं स्फुटः प्रज्ञालोको भवति यत्र वस्तूनां प्रमात्मकमेव ज्ञानं भवति संशयविपर्ययादीनां न भवति तत्रावसरः। अत एव प्रज्ञालोकः ऋतम्भरा प्रज्ञोच्यते। ऋतमेव विभर्ति सत्यमेव प्रकाशयतीत्यन्वर्थनाम्नीयं भवति। ऋ गतौ इति धातोर्निष्पन्नस्य ऋतशब्दस्य, सर्वे गत्यर्था धातव ज्ञानार्था इति स्वीकारेण भवति ज्ञानमर्थः।

---

१. साक्षात्कारे सुखादीनां कारणं मन उच्यते।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते।। (का. ८५)
सुखादीनां साक्षात्कारकारणं मन इति मनसो लक्षणमत्र कारिकायामुच्यते।
ज्ञानानामयौगपद्यात्तस्य मनसोऽणुत्वं स्वीक्रियते नैयायिकैः। वेदान्तिभिस्तु तस्य मध्यमपरिणामता उच्यत इति वर्ततेऽत्र विशेषः।

तथा साधारणतया व्याख्यानेन यज्ज्ञातमेव भवति न कस्याप्यज्ञातमिति स्वीकारे ऋतशब्दस्य अवितथमर्थो वक्तुं शक्यते। अवितथस्य सर्वैर्यथास्वरूपं ज्ञातुं शक्यत्वात् वितथो हि स्वरूपाभावात् यथास्वरूपं ज्ञातो न भवति। योगिनां मनोनिरोधे इयं प्रज्ञा भवति। निर्विचारवैशारद्य इत्यस्य मनोनिरोधदैर्घ्ये इत्यर्थो भवति।

अध्यात्मप्रसादः इति कथनेन आत्मनि चित्ते बुद्धौ वा अयं प्रसादो भवति नान्यत् तत्र किञ्चिदप्यपेक्ष्यते इत्युक्तं भवति।

**आत्मा कलेवरे यत्ने स्वभावे परमात्मनि।**
**चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥**

इति धरणिकोशात् आत्मशब्दस्य चित्तं बुद्धिर्वा अर्थो गृह्यते अस्मिन् विषये। अतः चित्तमेव तादृशसामर्थ्ययुक्तं भवतीति गम्यते। तत्र बाह्यसाधनानामपेक्षा न भवति। एतादृशं योगिचित्तं केवलं सहृदयस्य चित्तस्य स्थितेः प्रदर्शनाय उपादीयते। अत एवं वक्तुं शक्यते यथा योगिचित्तं प्रमाणादीन् नापेक्षते लौकिका विषया अपि अपेक्षिता न भवन्ति तत्र अतीतानागतानामपि प्रत्यक्षकरणात्। अतो विषया अपि अलौकिका भवन्ति। सहृदयचित्तमपि अलौकिकमानन्दं विषयीकरोति। अलौकिक आनन्दो विषयासम्पृक्तौ भवत्यात्मानन्दः। विभावादयोऽपि अलौकिका एव भवन्ति अलौकिकानन्दजनकाः। अतः इदमपि वक्तुं शक्यते यथा योगिचित्तं प्रज्ञालोकं प्राप्य विलक्षणं भवति प्रज्ञालोकप्राप्तेः प्राक्कालिकात् चित्तात्।

तथैव सहृदयचित्तमपि विलक्षणं भवति रसग्रहणकाले। तदानीम् अन्तःकरणस्य परिमितप्रमातृत्वस्य मोषमन्तरा लोकोत्तरानन्दस्यानुभूतेरभावात्। काव्यं हि लोकोत्तरमानन्दं जनयति। अत एव रमणीयार्थप्रतिपादकः शब्दः काव्यमित्यत्र रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरतेत्युच्यते रसगंगाधरे। लोकोत्तराह्लादजनकं ज्ञानञ्च न लौकिकसामग्रया सम्भवति। तेन अलौकिकसामग्रीभिस्तादृशं ज्ञानं जायत इति स्वीकृतं भवति। अत एव साहित्यिका अलौकिकव्यापारं स्वीकुर्वन्ति। पण्डितराजोऽपि विभावादिभिः सम्भूय प्रादुर्भावितेनालौकिक– व्यापारेणेति वदन् विभावादिभिः अलौकिकव्यापारस्योत्पत्तिं वदति। अयं व्यापारः ज्ञानरूपो भवति ज्ञानेनैवाज्ञाननिवृत्तेरनुभूत्वात्। इदमत्र विचारणीयं भवति अलौकिकव्यापरस्योत्पादिका लोकभिन्ना एव सामग्री वक्तव्या। अत एव विभावादयो विगलितदुष्यन्तरमणीत्वादिधर्मका भवन्ति। एवञ्च ते अलौकिका जाताः लौकिकेषु तादृशधर्मविगलनाभावात्।

सहृदयस्य हृदयमपि अलौकिकं भवति परिमितप्रमातृत्वस्य रसग्रहणकाले मोषात्। इदानीं परिमितानां प्रमाणैः परिच्छिन्नानां विषयाणां ग्रहणं न भवति किन्तु प्रमाणापरिच्छेद्यस्य आत्मन आनन्दरूपस्य ग्रहणं भवति निरुद्धवृत्तिकावस्थायां तेनात्मनो ग्रहणस्य श्रुतत्वात्। तदुक्तं आचार्येण गौडब्रह्मानन्देन सिद्धान्तबिन्दौ–

**समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्।**
**न शक्यते वर्णयितुं गिरा तदा स्वयन्तदन्तःकरणेन गृह्यते॥**

इति वचनव्याख्यायाम् अन्तःकरणेन निरुद्धसर्ववृत्तिकेनेत्यर्थ इति वदता। यद्यप्यत्र एवं वक्तुं शक्यते–विभावादीनां पुनः पुनरनुसन्धानात्मा ज्ञानविशेषः भावनापदवाच्यः स्वीक्रियते भाव्यते उत्पाद्यते रसः अनयेति भावनेति भावनापदव्युत्पत्तेः। एकदानुसन्धानेन रसोत्पत्त्यभावात् पुनः पुनरनुसन्धानमेव भावनापदवाच्यं भवति। विभावादिभावनया अलौकिकज्ञानस्योत्पत्तिः कथं भवति विभावादयः किं पुनः पुनरनुसन्धानेन तेषां रसोत्पत्त्यानुकूल्यं वर्धतेऽतस्तेषामलौकिकत्वं शंकनीयं वर्तते। अस्या शंकायाः समाधानाय वेदान्तिनाम् मानसी सृष्टिर्ध्येया भवति। एवं हि पञ्चदशीग्रन्थे उच्यते–

**अन्या मांसमयी योषित् काचिदन्या मनोमयी।**
**मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी॥**

अयमाशयः–स्तनकेशवती मांसमयी योषिद् भिन्ना मनसि कल्पनाप्रसूता योषिदन्या। मांसमय्यो योषितो भिन्ना न भवन्ति परस्परं किन्तु तासामभेदो वर्तते। किन्तु मनोमयी योषिद् भिद्यते। किन्तत्र कारणमिति विचार्यते चेत् स्त्रीविषकानुराग एव अत्यन्तं दृढतरो वक्तुं शक्यते। प्राग्विनिविष्टवासनारूपेण स्त्रीविषयकानुरागो रत्याख्यः स्थायीभावो पुरुषाणामन्तःकरणे तिष्ठति रागादेव स्त्रियं चक्षुरादिकरणैर्हृदयं प्रविष्टां भावयन्ति पुरुषाः। एवमेव विभावादयश्चर्व्यमाणा भिन्ना भवन्ति। किन्तु तत्र सहृदयत्वमेव कारणं वर्तते। सहृदयत्वाभावे विभावादीनां चर्वणा रसो वा नानुभूयते अस्माभिः।

सहृदयत्ववशादेव प्राग्विनिविष्टवासनारूपाणां रत्यादीनां विभावादिभिरलौकिकैः संवलितानाम् अलौकिकव्यापारानन्तरं भवति चिद्विषयता रसता च। चिद्विषयत्वमन्तरा रसता न भवति। अत एव वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रस इत्युच्यते रसगंगाधरे। किन्त्विदं सहृदयत्वं कथं ज्ञातुं शक्यमिति विचारणायाम् एवं वक्तुं शक्यते। पश्वादियोनिषु अयं पुमान् इयं स्त्रीति विभागसत्त्वेऽपि मानवानां गर्दभयोनौ स्त्रीव्यक्तिं दृष्ट्वाऽपि न भवति रमणीयताबुद्धिः कामोद्दीपिका यादृशी बुद्धिः मानवीं स्वीयां परिणीतां दृष्ट्वा भवति। तत्र कारणं वर्तत उद्दीपनानां सन्निधानम् इति कथने युक्तता प्रतिभाति।

उद्दीपनानि हि यथा चन्द्रिकादयो भवन्ति, तथैव मनुष्ययोनिरपि भवति। प्रकृते काव्यविषये एतद् विचारस्य नाऽस्ति उपयोग इति वक्तुं न शक्यते। मनुष्येष्वेव बाहुल्येन काव्यश्रवणशक्तिसत्त्वेऽपि सहृदयतायाः स्पष्टतायै अस्यार्थस्यावश्यं वक्तव्यत्वात्। इदन्तु दृष्टान्तरूपेणोच्यते यथा मानवेतरां स्त्रीव्यक्तिं दृष्ट्वा मानवस्य रत्युद्बोधो न भवति, तथैव असहृदयस्य काव्यश्रवणेनाऽपि रसानुभूतिर्न भवति। एवं कथं भवतीति विचार्यते चेत् रत्यादेरलौकिकानन्दस्य वानुभूतये काव्यश्रवणेन हृदये प्रविष्टानां विभावादीनां पुनः पुनरनुसन्धानमावश्यकं वर्तते। अन्यथा पुनः पुनरनुसन्धानाभावे साधारणीकरणं

न स्यात्। कस्यचिद् वस्तुनः पुनः पुनरनुसन्धानञ्च रागाद् भवति। अत एवात्यन्ताभीष्टस्य वस्तुनो तिरोधाने, अत्यन्तप्रियस्य स्मरणे वा पुनःपुनस्तस्यैव चिन्तनं भवति। एवमेव स्त्रीषु संरक्तस्य ललितचरासु सरागस्य च काव्यश्रवणानन्तरं काव्यार्थस्य नायकनायिकाचरितसम्बद्धस्य चमत्कारजनककाव्यशब्दस्य च पुनःपुनरनुसन्धानं भवति। अतः सहृदयत्वमावश्यकं वर्तते। अन्यथा सहृदयत्वाभावे साधारणीकरणं विभावादीनां न सम्भवति विशेषधर्मविगलनाभावात्।

साधारणीकरणे हि दुष्यन्तरमणीत्वादिधर्माणां विगलनं भवति। अन्यथा शकुन्तलादौ अगम्यात्वप्रकारकज्ञानस्य बाधकस्य सत्त्वात् कान्तात्वेन तासां निर्विशंकं ग्रहणं न स्यात्। यद्यप्येवं वक्तुं शक्यते सहृदयस्याऽपि कृते शकुन्तलादौ दुष्यन्तरमणीत्वादेर्धर्मस्य विगलन न समीचीनम् इयं दुष्यन्तरमणी, इयं परकीयेति बुद्ध्योर्वर्तमानत्वेन तद्विपरीतबुद्धेरुदयसत्त्वेऽपि तत्र प्रामाण्यग्रहाभावस्य वक्तुं शक्यत्वात्। तथाऽपि ब्रह्मास्वादसहोदररसास्वादानुगुण्येन एतत् सर्वं भवतीति वक्तुं शक्यते। यथा ब्रह्मज्ञाने जाते हि वेदान्तिनो देहाध्यासस्य विगलनं वदन्ति। देहाध्यासो देहे आत्मबुद्धिस्तस्य विगलनं तत्र मिथ्यात्वज्ञानम्। तथैव ब्रह्मास्वादसहोदरे रसे अनुभूयमाने लघुकालखण्डस्य कृते स्वस्मिन् दुष्यन्तत्वबुद्धिः शकुन्तलादौ च कान्तात्वबुद्ध्यादेरुदयः स्वीकर्तव्यो भवति। यदि एतादृशं वैलक्षण्यमपि तत्र न स्यात् तर्हि तस्य ब्रह्मास्वादसहोदरत्वमपि न स्यात् ब्रह्मास्वादे हि देहेऽहंभावस्य निवृत्तिर्भवति, अत्र तु स्वस्मिन् दुष्यन्तत्वादेरारोपः। अत एव रसास्वादः अलौकिक उच्यते। अलौकिके तस्मिन् अलौकिका एव पदार्था उपोद्वलका भवन्ति। सर्वैरनुभूयमानस्य रसस्यापलपितुमशक्यत्वात् तदनुकूलतया विभावादीनां पुनः पुनरनुसंधानात्मा भावनाविशेषः स्वीक्रियते। दुष्यन्तरमणीत्वादीनां धर्माणां प्रतिबन्धकत्वात् तेषां विगलनम् अभावरूपं प्रतिबन्धकाभावविधया कारणं भवति। एतद्विगलनं रसोत्पत्त्यनुकूलतया स्वीक्रियमाणं सहृदये एव भवति।

सहृदयस्यैव रसोत्पत्तेः सत्त्वात्। इदानीं सहृदयशब्दस्य व्युत्पत्तौ प्रयासो विधीयते। सहृदयो हि हृदयेन सहितः उच्यते। किन्तु हृदयशब्दस्तत्र वर्तते विशेषार्थाधायकः। हृत्-अय-शब्दयोः समासेन हृदयशब्दस्य निष्पत्तिः स्वीक्रियते। तत्र हरणं हृत् इति व्युत्पत्तौ हृञ्-धातोः भावार्थे क्विप्प्रत्ययेन हरतीति हृत् इति कर्तरि क्विप्प्रत्ययेन वा उभयथा हृत्शब्दस्य व्युत्पत्तिर्वक्तुं शक्यते। अयशब्देऽपि अयनं अयः इति घञर्थक– 'क' प्रत्ययेन अय्धातोर्निष्पद्यते। अथवा अयते इति अयः इत्येवं व्युत्पत्तौ कर्तरि अच्प्रत्ययेन निष्पद्यते इति भवति विचारः। यद्युभयोः कर्तरि व्युत्पत्तिं स्वीकृत्य समासः क्रियते तर्हि यत् हरति अयते च तत् हृदयम् उच्यते। कः हरति गच्छति चेति विचारे अन्तःकरणमेव उपस्थितं भवति तस्यैव विशेषधर्माणां हरणे कर्तृत्वात् सामान्यधर्माणां प्रापणे च गतिमत्वात्। एवं च एतादृशेन अन्तःकरणेन सह यो वर्तते सः सहृदय उच्यते। अत्र हरणं रसोत्पत्तौ बाधकानां दुष्यन्तरमणीत्वादिधर्माणाम्। भानं प्रापणं कान्तात्वादिसामान्यधर्माणाम्। अनयोर्द्वयोः सत्त्वे सहृदयशब्दस्य व्युत्पत्तिः संगच्छते।

तेन काव्यं प्रति अत्यन्तानुरागवान् साधारणीकरणानुकूलान्तःकरणयुक्तः सहृदयो भवति। यदि

च उभयोर्भावव्युत्पत्त्या सिद्धिरुच्यते अर्थात् हृत् इत्यस्य हरणम् अर्थः क्रियते अय इत्यस्य च गमनमर्थः क्रियते तदा हृच्चासौ अयश्चेति व्युत्पत्तौ हृदयशब्दस्यार्थे निर्धारणीये हरणव्यापारस्य अयने अयनशब्दवाच्ये गतौ विशेषणत्वं विचारणीयं भवति। अतः उभयोर्व्यापारविशेषरूपत्वात् हरणपूर्वकमयनं हृदयशब्दस्यार्थो वक्तव्यः। तथा च तादृशेन व्यापारद्वयेन सहितो यो वर्तते स एव सहृदय उच्यते तेन सहेति तुल्ययोगे इति वहुब्रीहिसमासः। अत्र हरणं विशेषधर्माणां प्रमोषः अयनं च रसोत्पत्त्यनुकूलत्वेन प्रवृत्तिः। एतद् द्वयं च सहृदयस्यैव भवति। अत एव सहृदयस्यैव रसोत्पत्तिर्भवतीति व्यवस्थाप्यते साहित्यिकैः। ब्रह्मास्वादसहोदरत्वं रसस्य उच्यमानं न केवलं तस्यालौकिकत्वं बोधयति अपितु रसोत्पत्तिसाधनानामपि लोकविलक्षणत्वं बोधयति। एतद्दृष्ट्या विचारे हि सत्सु बहुषु साधनेषु केवलमधिकारिसन्धिविचार एव क्रियते प्रकृतानुकूलत्वात्। निर्विकल्पसमाधिर्न सर्वस्य भवति अपितु कस्यचिदेव अत्यन्तवैराग्यसम्पन्नस्येति विचारपूर्वकं निर्णीतं योगशास्त्रे। तथा हि 'तत्परं पुरुषख्यातेर्गुणवैषम्यम्' (योगसूत्रम् १.१६) इत्यत्र भाष्ये उक्तम्-दृष्टानुश्रविकविषयदोषदर्शी विरक्तः। एतस्यामवस्थायाम् अवश्यं ज्ञानं भवतीत्यग्रे उच्यते तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम्' इति। यस्योदये प्रत्युदितख्यातिः कृतकृत्यो भवतीति भाष्याशयः। तीव्रसंवेगानामासन्नः १.२१ सूत्र-भाष्येऽपि तीव्रसंवेगानामासन्नः समाधिलाभः समाधिफलं च भवतीत्युक्तम्। अत्र तीव्रसंवेग इष्टविषयः तीव्रानुरागः। एतादृशस्यानुरागस्य काव्यार्थं प्रति सहृदयस्य सत्त्वात् भवति तस्य रसोदयः योगिनां समाधाविवात्मसाक्षात्कारः। एवञ्च तीव्रसंवेगः तीव्रवैराग्यञ्चेत्युभयं निर्विकल्पसमाधेः कृते आवश्यकत्वेन वर्तेते। ब्रह्मास्वादपदेन च निर्विकल्पकसमाधौ गृह्यमाण आनन्द एव उच्यते। एतत् सादृश्यं यदि रसे स्वीक्रियते तर्हि विलक्षणासाधनजन्यता, विलक्षणधिकारिणाऽनुभूयमानता च वक्तव्या। विलक्षणाधिकारिणश्च सहृदयाः। ते हि अन्यत्र विरागवन्तोऽपि भवन्ति, काव्यश्रवणे प्राप्ते अन्यविषयाणां त्यागस्य तैः क्रियमाणत्वात्। तीव्रसंवेगोऽपि तेषु वर्तते येन झटिति रसोद्बोधो भवति। अयं तीव्रंसंवेगः मनसो तीव्रानुरागो वर्तते काव्यार्थं प्रति तीव्रानुरागः सहृदयत्वमन्तरा न सम्भवति। ब्रह्मसाक्षात्कर्तुं प्रवृत्ता हि दुःखदोषानुदर्शनेन संसारं विस्मरन्ति इमे सहृदयास्तु तीव्रानुरागेण तन्मयीभवनेनेति कथनेनोभयोः साम्यं वक्तुं शक्यते। एवं रसगंगाधरदिशा रसोत्पत्तिविषयको विचारो मया कृतः। रसगंगाधरकृता योगदृष्टिश्च अद्वैतवेदान्तदृष्टिः, समादृता रसविचारप्रसंगे। अतः द्वयोर्दर्शनयो दृष्टीनां स्पष्टप्रतिपत्तये ग्रन्थांशोऽत्र प्रस्तुत्य विवेचितः कश्चन। सुधियश्च विचारपटवोऽत्र सौष्ठवे दुष्टत्वे वा प्रमाणभूता अनुरुध्यन्ते गुणग्रहणायेति शम्।

# श्रीदयानन्दचरितमहाकाव्ये समाजचित्रम्

**सुषमा कुमारी**

श्रीदयानन्दचरितमहाकाव्ये समाजचित्रं व्यावहारिकं दृश्यते। यतो हि तस्मिन् समये जनाः पशूनां पक्षिणाञ्च वधमकुर्वन्। महर्षेः जन्मानन्तरं सर्वासु कुरीतिषु अवरोधः जातः। जन्तवः अपि प्रार्थनां कुर्वन्ति यत्–

**त्वदीयवेदास्तु पवित्रभावनाः कथन्तु पाखण्डबलेन ते ततः।**
**प्रभो! दिशन्तीह सदा हि हिंसनं तदीयमूलं किल मूलशङ्करः॥**[1]

धेनोर्वधमपि तस्मिन् समये प्रचलितमासीत्। अतः महर्षेः जन्मानन्तरं ताः अपि प्रार्थयन्ति यत्

**पयः प्रदानेन समस्त-सेवकाः मनीषिणामादरपात्रधेनवः।**
**मताः सदा याः किल राष्ट्रनाभयः सुपालयेत् ताः शिशुमूलशङ्करः॥**[2]

अजार्भकाश्चापि प्रसन्नतां गताः, तथा च कथयन्ति–वयं वराकाः बहुकालकम्पिताः। प्रभो! शङ्करं समवाप्य वयं सनाथाः जाताः। मत्स्याः (समुद्रः) अपि कथयन्ति यत्–मूलशङ्करः अस्मान् रक्षतु, अधुना अनेके कुमार्गगामिनः व्यर्थाः प्रपञ्चान् प्रसारयन्ति, परमधुना वयं सुरक्षिताः। मूलशङ्करस्य जन्मना पितरौ प्रसन्नौ आस्ताम्।

**स कर्षणस्तत्र कलत्रकः कृती सुते सुचेता जनतापकर्षणः।**
**पुरोहितं तं सुतरां स्वसेवया पिता सिषेवे बहुमानशोभया॥**[3]

अन्धकारः, समस्तपातकाः च निरस्ताः जाताः। न कोऽपि तप्तः आसीत् न च कोऽपि पतितः। मूलशंकरस्य जन्मतः सर्वप्राणिनामन्यायः समाप्तो जातः। सामान्यतः कर्षणः एकः सामान्यः पुरुषोऽभवत् परं तेन स्वपुत्रं यजुर्वेदमध्यापितः। सः शैव आसीत् अतः पुनः पुनः पार्थिवशैवपूजनमपि आदिशत्। शिवरात्रे प्रसिद्धमहोत्सवे मूलशङ्करोऽपि उपवासम् अधारयत्। मध्यरात्रौ सर्वे जनाः तु सुप्ताः जाताः परं मूलशङ्करः न सुप्तः। तदा तेनादृश्यत–

---

१. श्री द. च म. १/२५
२. श्री द. च म. १/२८
३. श्री द. च म. १/४९

**शिवस्य मूर्तौ विचरन्तु मूषिकः कुहलं चैकमजीजनन्निजम्।**
**चखाद वस्तूनि स इत्यनर्थकं ददर्श धीरः स च मूलशङ्करः॥**[४]

तदा अधीरो भूत्वा मूलशङ्करः पितरम् अपृच्छत् यत्-सः पार्थिव शिवः यः महत्त्वमण्डितः सत्यशिवः। यदि शिवः अनाद्यनन्तं विभुः प्रभुः च तदा कथं मृण्मयशिवस्याराधना क्रियते? अतः अहिंसा, सत्याऽस्तेयं परिग्रहाणां व्रतं गृहीत्वा यदि जनः ब्रह्मगतः तदा सः नितरां सुखायते। सर्वं वृतान्तं श्रुत्वा कर्षणः शङ्करं गृहगमनस्यादेशमददात्। षोडशवर्षस्य वयसि एव स्वभगिन्याः विषूचिका रोगविशेषेण मृत्युं प्राप्ता, एतद् दृष्ट्वा सः विस्मये आगतः। केचिद् दिनेषु पितृव्योऽपि विषूचिकया विपन्नो जातः। मूलशङ्करः अचिन्तयत्-मृत्युपथाद् विमोचनं कथं भवेत्? जीवन-मृत्योः यथार्थसत्यं किं भवितव्यम् एतेषां तर्काणां विषये मूलशङ्करः चिन्तितोऽभवत्। परार्थमीप्सया मूलशङ्करे वैराग्यभावः जागतिः। स्वविवाहसमारोहे विरक्तभावोभूत्वा शङ्करः 'सायल' ग्रामं गतः केनापि साधुना नैष्ठिकं ब्रह्मचर्यं ध ारणार्थं परामर्शं दत्तवान्। ततः तव नाम 'शुद्धचेतनः' भविष्यति। ततः-

**ततश्च 'चाणो' धराधरे धृतः स पूरणानन्दसरस्वती यतिः।**
**चकार नाम्नेति च शुद्धचेतनात् स्वामी दयानन्दसरस्वती यमी॥**[५]

एवम्प्रकारेण स्वामी स्थान-स्थानेषु भ्रमित्वा सिद्धिं प्राप्तवान्। महर्षेः समये शास्त्राणामुपरि गहनं शास्त्रार्थं भवति स्म। तत्र कोऽपि प्रसिद्धः अंगदशास्त्रीमहोदयः वैदिकसाहित्यस्य वेत्ता आसीत्। सोऽपि दयानन्दस्य समक्षं स्थातुं न समर्थः। सोऽवदत् यत्-महर्षिरयम् श्रुतौ निपुणः मम प्रियश्च। दयानन्दः स्वश्रेष्ठतकार्णामुपरि सर्वदा जयमस्थापयत्। सः विपक्षस्य बोधशक्तिः सपदि अहरत्। महर्षेरयमुद्घोषा आसीत् यत् पुराणानां वाणी वेदविरुद्धा वर्तते। यतोहि यावत् पर्यन्तं मानवाः कर्मणा शुद्धाः न भवन्तु तावत् तेषां कर्मशुद्धिः न भवितुं शक्नोति। यदा शास्त्रे पराजितोऽङ्गदपण्डितः महर्षेः चरणस्पर्शमकरोत् तदा सर्वे विद्वत् वृन्देनाह यत्-पुराणानि हेयानि सन्ति। यदा महर्षिः कासगंजजनैः व्याकरणवेत्तानां स्वगुरुजनानां मृत्योः सूचनां श्रुता तदा सः खिन्नोऽभवत्। तस्मिन् समये जनाः कर्महीनं भूत्वा पाषाणमूर्तिसु अन्धविश्वासमकुर्वन्।

अतः सोऽकथयत्-

**कुरुध्वं ततः कर्म वेदानुकूलं पुराणं परित्यज्य संयोज्य योगम्।**
**सदा त्यागपूर्वश्च भोगो भवेद् वो ततो मङ्गलं प्राप्त सौख्यं लभध्वम्॥**[६]

तस्मिन्काले महर्षिः नीतिमार्गं चरन्, पीडितानां पीडां हरन्, भक्तिमार्गं भजन् वेदविद्यायाः प्रचारं कुर्वन् देदीप्यते। कदाचित् केचन म्लेच्छभावयुक्ताः जनाः अपृच्छन्-भूयसी सद्गतिः कथं स्याद्?

---

४. श्री द. च म. १/६१
५. श्री द. च म. १/९९
६. श्री द. च म. ५/१९

महर्षेः समाधानम्–

विना वेदशिक्षां न सत्यप्रबोधः ततः एवम्प्रकारस्य सम्प्रदायं विहाय यूयं सुकर्माणि कुरुध्वं भूत्यै यतध्वम् च।

विपक्षान् पराजित्य, स वेदार्थवेत्ता, दान्तः-शान्तः, महर्षिः ऋषीणां प्रतिष्ठां प्रपन्नः। जनाः विष्णोः शिवस्य मूर्तौ स्थापितवन्तः महर्षिरकथयत्-इयान् द्रव्यराशिं शिशूनां सुशिक्षाकृते व्ययः भवितव्यः। स्वदेशे जनानांकृते भोजनं वस्त्रमावासादयः अभावः अतः धनमेतद् सुविद्यालयानां स्थापनायां व्ययं भवितव्यम्।

**वृथा मन्दिरे पूजनासञ्जनं तद् वृथा रासलीला सदाचारहीना।**
**विना कर्मशुद्धिं न पञ्चामृतं स्यादलं मोक्षलब्ध्यै न वृन्दादलं वा॥**[७]

तथा च–

**धनं वा प्रयुक्तं सदा धर्मकार्ये भवेद् हेतुमूलं सुखे प्रीति शान्त्योः।**
**अनाथातुराशक्तवृद्धाश्च नार्यः सुरक्ष्याः प्रतीक्ष्याः निरीक्ष्याः सुधीभिः॥**[८]

महर्षिरकथयत् यत्–पौराणिककथानामनुसृत्य जनाः अंधविश्वासे अंधीभूताः जाताः।

अतः महर्षिरकथयत्–

**प्रभूताः कथा इत्थमाकीर्तिता याः**
**सुकर्माणि धर्म्याणि वेदोदितानि।**
**अवज्ञाय सर्वान् जनान् स्वीयदेशे**
**मुधा भ्रामयन्तीति ताश्चिन्तनीयाः॥**[९]

वृद्धावस्थायां विवाहः, अल्पवयस्येव बालकानां विवाहः भारतस्य दुर्दशायाः मूलम्।

**समाधानम्–**

अतः विधवाबालिकानां पुनर्विवाहम्प्रति स्वामिदयानन्देन भृशं प्रयासः कृतः–

**यदा कापि बाला भवत्यत्र पत्या विहीना द्वितीयं धवं प्राप्नुयात् सा।**
**चात्रास्ति निन्दा वराकी विधातुं स्वकीयं वयश्चेत् सुमार्गश्रितास्ति॥**[१०]

---

७. श्री द. च म. ५/२९
८. श्री द. च म. ५/३१
९. श्री द. च म. ५/४०
१०. श्री द. च म. ५/४३

अतः प्राचीनरूढीनां त्यक्त्वा वर्तमानयुगस्यावश्यकतां ग्राह्यम्। महर्षिः स्वोपदेशेष्वकथयत्–

**यदा वेदविद्योत्तमा सम्मता ते यदा तां विना नैव मोक्षो मतस्ते।**
**तदा मानवाः सर्व एव त्वया ते कथं न क्रियन्ते तदन्तर्निविष्टाः॥**[११]

सर्वे जनाः अन्धभूताः पुराणेषु विश्वासं कुर्वन्ति। वेदविद्या गता, धर्मशास्त्रं गतम् स्मार्तशास्त्रं गतम्, कर्मकाण्डं गतम्, पण्डिताः सर्वे वृथैव विवादे प्रसक्ताः सन्ति।

अतः महर्षिरकथयत्–

**क्वचिच्चन्द्रशुद्धिं क्वचित् सूर्यशुद्धिं क्वचित् केतुकीर्तिः सदोद्घोषयन्ति।**
**ग्रहादिप्रवृत्तिं तदीयां निवृत्तिं न जानन्ति ते ज्यौतिषाचार्यवर्य्याः॥**[१२]

दयानन्दः कथयति यत्-ईश्वरं विहाय न कोऽपि जनः मृत्योः पश्चाद् किं भवति जानाति, अतः ज्योतिशास्त्रं व्यर्थमस्ति–

**मृतो यत्र गन्ता भवन्तः कथञ्चिद् विदन्त्यत्र गम्यस्थलं तस्य सत्यम्।**
**विना व्यापकं सर्वबोधं विभुं कः कथं वेत्तु तत्त्वं सुवेत्ताऽपि कश्चित्॥**[१३]

पिण्डतर्पणादिक्रियासु जनानां रुचिः न भवितव्या, यतोहि एतैः मुक्तिर्न संभवति।

एकदा एकः गङ्गादिरामपण्डित उवाच यत्-अहं शास्त्रार्थे महर्षिं परास्तं करिष्यामि न चेत् महर्षेः कण्ठं माल्येन भूषयिष्यामि।

स्वामिवर्येणोक्तम्–

**दयानन्दवर्येण गीतोक्तमेकं स पृष्टोऽथ पद्यं तदर्थञ्च कर्तुम्।**
**स आवेशतो वावदूको वराकः सरोषं ततः स्थानमन्यज्जगाम॥**[१४]

स्वामिदयानन्दः सदैव शान्तो भूत्वा एतावतानां समाजिककुरीतीनां समाधानं कुर्वन्ति स्म।

स्वामिदयानन्दः मद्यमांसादिभक्षकाणां जनानां विरोधी आसीत्

**क्वचित् कुक्कुटाण्डं क्वचिच्चामिषान्नं पशूनां क्वचित् पक्षिणाञ्चापि मांसम्।**
**स्वयं धार्मिकं मन्यमाना अदन्ति परो धर्मभावो नवः कोऽप्यपूर्वः॥**[१५]

---

११. श्री द. च म. ५/४७
१२. श्री द. च म. ५/५४
१३. श्री द. च म. ५/५८
१४. श्री द. च म. ५/६३
१५. श्री द. च म. ५/७०

महर्षिः वेदेषु, स्मृतिषु, नानाशास्त्रीयविधिषु पारङ्गतः आसीत्। महर्षेः ज्ञानधनं विस्तृतमासीत्। अनेके प्रखरपण्डिताः भवत अनादरं कृतवन्तः। परं भवतः कीर्तेः समक्षं ते न स्थातुं समर्थाः। वेदविरोधिमतानि बहुतया आसन् तस्मिन् समये।

**विजहुश्चिद्वेदनिधिं कृतिनः न पपुः श्रुतिशास्त्ररसं सुधियः।**
**उदितस्त्वमिहार्क इवाधिधरं शुचिबोधकरः शुभकर्मपरः॥**[१६]

भुवि सर्वे जनाः, पशवः, पक्षिणाश्च मुदिता आसन्। वैदेशिकपरम्परायां जनाः स्ववेदविद्यां विस्मृताः जाताः, अतः जनेषु प्रभोः कृपा विधीयताम्। महर्षिः प्रार्थनां करोति स्म यत्–हे प्रभो! सत्कृपां कुरुष्व, सर्वे जनाः प्रसन्नाः भवन्तु, ते सदैवं सद्बुद्धिं प्राप्नुवन्तु, वेदमार्गे चलन्तु, कर्मकुशलो भूत्वा जयन्तु। तथा च–

**मनस्तपो वचस्तपस्तथा च कायिकं तपः**
**श्रिता जनास्तपोभृतां महात्मनां महत्पदम्।**
**सदा चलन्तु सत्पथे परेशभक्तिभाविताः**
**स्वराष्ट्रभूतिभूषिता भवन्तु न प्रमादिनः॥**[१७]

समाजे प्रसृतेयं कुरीति यत्–बाल्यकाले विवाहः विधवानां विवाहः, इत्यादीनि कुमतानि प्रचलन्ति स्म तस्मिन् समये। अतः महर्षिः कथयति–

**न पाणिपीडनं भवेद्धि शैशवे न वार्धके**
**सदैव यौवने यथोचितं व्रजन्तु सज्जनाः।**
**धरातले च हृष्टपुष्टशूरशेमुषी भृतः श्रमेऽपि**
**दक्षताऽक्षता भवन्तु ते, न निर्धनाः॥**[१८]

एवम्प्रकारेण कुरीतयः, अनेकाः कुकर्माः, स्त्रीणां कृतेऽपराधाः भृशं रूपेण प्रसृताः आसन्। स्वामिदयानन्देन सर्वासां कुप्रथानां समूलविनाशाय प्रयासमकरोत् तथा च सर्वे भारतीयजनाः अपि तेनैव साकमासन्। शीघ्रतया सम्पूर्णे भारतदेशे एतासां कुरीतीनां समाप्तिः जाता। सर्वे जनाः प्रसन्नाः मुदिताः आसन्, यतोहि प्रभोः कृपया एतादृशः जनः प्राप्तः यः अधर्मस्य विनाशाय, धर्मस्य च संस्थापनाय अवतीर्णो बभूव। अतः एतादृशस्य महामानवस्य समक्षं विद्वत्समाजोऽपि नतमस्तको जातः।

---

१६. श्री द. च म. ५/७७
१७. श्री द. च म. ५/८८
१८. श्री द. च म. ५/८९

# वैयाकरणमते शक्तिस्वरूपविमर्शः

**डॉ. गुणप्रकाशशर्मा**

अथ च शक्लृ' शक्तौ इत्यस्माद्धातोः 'इत्यस्याद्धातोः 'स्त्रियां क्तिन्' इत्यनेन क्तिन् प्रत्यये सति तथा च शक्यते बोधः कर्त्तुमनया इति शक्तिः शब्दो द्रनिष्पद्यते। शब्देषु काचन शक्तिः वर्तते। यदि शब्देषु शक्तिर्न स्यात् तदा बहुकृतेऽपि प्रयत्ने शाब्दबोधो न स्यात्। अत एव वाक्यपदीयकारेण प्रोक्तम्–

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।**
**न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः॥'[१]**

अर्थात् विषयत्वं प्राप्ता एव शब्दा अर्थप्रकाशकाः। अपि च महाभाष्येऽपि "शब्द उपलब्धोऽर्थं प्रत्याययति न सत्तामात्रेण"[२] इति प्रतिपादितम्। प्रथमं तावत् शक्तिर्नाम का इति विचिकित्सायां वैयाकरणशिरोमणिना नागेशभट्टेन उच्यते शक्तिर्नाम का इति विचिकित्सायां "शब्दार्थयोस्तादात्म्यमेव शक्तिः[३]" इति। अथ च "सर्वे शब्दाः सर्वार्थवाचकाः, न, अपितु तत्र कार्यकारणभावः कल्प्यते।"

"तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। वैशिष्ट्यञ्च–स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपदविषयक्त्वोभयसम्बन्धेन"[४] इति।

वाक्यपदीये शब्दार्थयोः तादात्म्यसम्बन्धे आह–

**नित्याः शब्दार्थसम्बन्धास्तत्राम्नाताः महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः[५]॥**

---

१. वाक्यपदीयम् ब्रह्मकाण्ड कारिका ५६,
२. म.भा. १/१/६८ पृ.
३. प.ल. मंजूषाकार उद्योतटीकायां
४. तत्रैव पृ. १२ प.ल. मंजूषायाम्
५. वा.प. का. २३

यद्यपि शक्तिविषये विदुषां वैमत्यमवलोक्यते। उक्तञ्च साहित्यदर्पणे–

**मुख्यार्थबाधे तद्युक्ते ययाऽन्योऽर्थः प्रतीयते।**
**रूढेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता॥**[६]

वाचकलक्षकव्यञ्जकेति भेदेन त्रिविधशब्दानामर्थप्रतिपत्तये अभिधालक्षणाव्यञ्जनेति शक्तित्रयं मन्त्यन्ते साहित्यिकाः।

तत्र नैयायिकाः शक्तिर्लक्षणेति वृत्तिमेव स्वीकुर्वन्ति, न व्यञ्जनां, लक्षणयैव तस्या गतार्थत्वात्।

नागेशः पदपदार्थयोः सम्बन्धविशेषं शक्तिमुररीकरोति। सा च वाच्यवाचकरूपा शक्तिः। पदपदार्थयोरभेदज्ञानेन शक्तिग्रहः। पदनिष्ठशक्तिं संकेतो बोधयति। अतः संकेतं शक्तिर्मन्यते। शक्तिरेवार्थबोधनसाधिका। शक्तिग्रहश्च वाक्येन भवति। वाक्यलक्षणमाचार्येण विश्वनाथेन–"वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः"[७] इति प्रतिपादितम्। तत्र योग्यता परस्परान्वयप्रयोजकधर्मवत्त्वं योग्यता। वाक्यसङ्केतबोधजनयित्री यद्वा अव्यवहितोत्तरवादिसम्बन्धेन यत्पदे यत्प्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्माकांक्षा। प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः। एतद्गुणत्रययुक्तः पदसमूहो वाक्यम्। पदञ्च - वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः[८]" इति। शब्दार्थयोः निरूपणं विवेचयता मम्मटेन प्रतिपाद्यते यत् शब्दः त्रिविधः "स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा" वाच्यादयस्तदर्थाः स्युः"[९] इति। तत्र शब्दस्त्रिधा वाचको लाक्षणिको व्यञ्जकश्चेति। तेषामर्थोऽपि त्रिविधः वाच्यलक्ष्योव्यङ्ग्यश्चेति। शब्दस्य तिस्रः शक्तयः। अभिधालक्षणाव्यञ्जनाचेतिभेदेन। लक्षकेन शब्देन लक्ष्योऽर्थो लक्षणाशक्त्या बोध्यते। वाचकेन शब्देन वाच्योऽर्थोभिधाशक्त्या बोध्यते। व्यञ्जकेन शब्देन व्यङ्ग्योऽर्थो व्यञ्जनाशक्त्या व्यज्यते। एवं प्रकारेण साहित्यिकाः शब्दस्य तिस्रः शक्तयो मत्यन्ते।

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥**[१०]

तत्र शक्तिः कः पदार्थः एवम्भूतायां जिज्ञासायां तार्किकाः ईश्वरेच्छारूपां शक्तिमुररी कुर्वन्ति। सा चेच्छा द्विविधा। प्रथमं तावत् पदप्रकारार्थविशेष्यिका, अपरं अर्थप्रकारकपदविशेष्यिका चेति। "अस्माच्छब्दादयमर्थो बोद्धव्यः" इति प्रथमं स्वरूपम् अर्थात् अस्मात् घटादिपदात् अयम्

६. काव्यप्रकाशे द्वितीयोल्लासे पृ. ३१
७. साहित्यदर्पणे द्वि.परि. पृ. ४६,
८. तत्रैव पृ. ५१
९. काव्यप्रकाशे द्वि.उ. पृ. १९
१०. सा.द.पृ. ५३

जात्याकृतिविशिष्टव्यक्तिरूपः कम्बुग्रीवादिमानर्थः बोध्यते इति रूपाम् अर्थविशेष्यिकामिच्छारूपां शक्तिं मन्यन्ते।

अपरं स्वरूपमाह-'इदं पदमिममर्थं बोधयतु' इत्यत्र इदमर्थनिष्ठविषयता-निरूपकबोधनिष्ठ-जन्यतानिरूपितजनकतावत्पदमिति-अर्थप्रकारकपदविशेष्यिकेच्छाशक्तिः। एवमेव एतत्पदजन्यो बोध एतदर्थनिष्ठविषयतानिरूपको भवतु इति बोधविशेष्यिका, एतदर्थनिष्ठा विषयता एतत्पदजन्य बोधनिरूपिता भवत्वति विषयताविशेष्यिका नानाविधेश्वरेच्छा विनिगमनाविरहात्कल्पनीया। सैव ईश्वरेच्छैव सङ्केतः सम्बन्धः।

यद्यपि ईश्वरेच्छारूपशक्तेः विषयत्वलक्षणः सम्बन्धः पदेऽर्थे बोधे च, तथापि बोधनिष्ठजन्यता-निरूपितजनकतावत्वेन शक्तिविषयो वाचकः, पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः।
यद्यपि पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः। यद्यपि

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**[११]

शक्तिग्राहकशिरोमणिः व्यवहारो वर्तते, तस्य व्यवहारस्य वाक्ये एव शक्तिर्जायते।

शक्तिग्रहजिज्ञासुर्बालः प्रयोज्यप्रयोजकव्यवहारं दृष्ट्वा प्रथमं वाक्ये सत्र शक्तिग्रहं करोति। यथा प्रयोजकेन घटमानय इति वाक्यं श्रुत्वा घटकर्मकमानयनं प्रेरणाविषयः इत्यर्थं जानाति, पुनः घटपदस्थाने पटपदं कुर्वन् पटमानय इत्युच्चरितम्, तद्श्रुत्वा पटानयेन प्रवृत्तं प्रयोज्यं दृष्ट्वा तत्र पटपदस्य शक्तिग्रहं करोति। अनेन रूपेण सर्वेषु पदेषु शक्तिग्रहो जायते। अर्थात् "आवापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदैः शक्तिग्रहो जायते।"[१२]

वैयाकरणा एनं मतं न स्वीकुर्वन्ति। नैयायिकानामीश्वरेच्छा शक्तिरिति तैर्न स्वीक्रियते "इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात् सम्बन्धो हि सम्बन्धिद्वयभिभत्वे सति द्विष्ठत्वे च सति-आश्रयतया विशिष्टबुद्धिनियामकः। यथा घटवद् भूतलमित्यत्र घटभूतलयोः यः संयोगाख्यः सम्बन्धः स घटभूतलोभयसम्बन्धिभ्यां भिन्नः, घटभूतलोभयसम्बन्धिनिष्ठः द्विष्ठो घटनिरूपितसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकश्च वर्तते।

एवञ्च 'घटशब्दः इच्छावान् तदर्थो वा इच्छावान्'[१३] इति व्यवहारो न भवति। इच्छायाः आत्मनो गुणत्वात्, इच्छायाः आत्मनिष्ठत्वात् पदपदार्थोभयतिष्ठत्वानुपपत्तेः, तेषां गुणः इच्छा न

११. प.ल.म. पृ. १
१२. प.ल.म. पृ. १८
१३. तत्रैव पृ. १९

भवितुमर्हति सः सम्बन्धोऽपि न कस्याऽपि भवितुमर्हति। अत एव "पदपदार्थयोः सम्बन्धान्तरभूता वाच्यवाचकभावपरपर्याया एव शक्तिः नूनमुरीकर्त्तव्या। तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्। तदेव सम्बन्धः उभयनिरूपिततादात्म्यानुभय इत्यर्थपदयोर्व्यवहारात्। दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृश्यते।[१४] तथैव शक्तेरपि कार्यजनने शब्दार्थयोस्तादात्म्यमुपकारकम्। शक्तिः कार्यजनकत्वे सति तादात्म्य नियामिकेत्युक्तम् आचार्येण भर्तृहरिणाऽपि–

**उपकारः स यत्रास्ति धर्मस्तत्राऽनुगम्यते।**
**शक्तिनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥**[१५]

उपकारः– उपकार्योकारकयोर्बोधशक्त्योरुपकारकस्वभावः सम्बन्धो यत्रास्ति, तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः, गुणानामपि द्रव्याश्रिततत्व-नियामकः। शक्तीनामपि कार्यजनने उपकारकः, गुणानामपि द्रव्याश्रिततत्वनियामकः। असौ सम्बन्धः वाच्यवाचकभावरूपसम्बन्धः पदे वाक्ये च भवतः। तदर्थं उक्तमपि न्यायभाष्यकारेण–"समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्, वाक्यलक्षणाया वाचोऽर्थलक्षणम्' इति। अनेन पदेष्विव वाक्येष्वपीश्वरसमय इति स्पष्टमेवोक्तम्। तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इति सङ्घातार्थः। तथा च स्वयमाचार्येण पतञ्जलिनाऽपि।

"सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः[१७]" इति। अनया पद्धत्या वैयाकरणः ईश्वरेच्छाशक्तिरूपं सम्बन्धं खण्डयित्वा वाच्यवाचक-भावसम्बन्धरूपा शक्तिः स्वीक्रियते।

'ईश्वरसङ्केत एव शक्तिः' इति नैयायिकमतं न समीचीनम्, यतः 'अयमेतच्छक्यः अत्रास्य शक्तिः' इत्यस्य सङ्केतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्। अत एव न्यायवाचस्पत्येऽपि प्रोक्तम्–सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेतः इति।

"तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवाक्षितः शब्दः शक्तः इत्युच्यते। शब्दार्थयोस्तादात्म्यादेव श्लोकं श्रृणोदथार्थं श्रृणोति, अर्थं वदति इत्यादिव्यवहारः 'ओमित्येकाक्षरं ब्रह्म[१८] रामेति द्वयक्षरं नाम मानभङ्गः पिनाकिनः' "वृद्धिरादैच्"[१९] इति

१४. प.ल.म. पृ. १९
१५. वाक्यपदीयम् वाक्यकाण्डम् ३/३/६
१६. तत्रैव मूले पृ. २२
१७. योगभाष्यम् ३/१७
१८. ब्रह्मविद्योपनिषत् ३
१९. पा.सू. १/१/१

शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च।

तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्।[२०] वस्तुतः अर्थस्तु न श्रवणविषयः न कथनस्य।

अत्र शब्दार्थयोः तादात्म्यस्वीकारे गुडशब्दोच्चारणे मुखे माधुर्यरसापत्तिः, वह्निशब्दोच्चारणे मुखे दाहाद्यापतिः इत्यादयः दोषाः समागताः। वस्तुतः शब्दार्थयोः भेदाऽस्त्येव, केवलं व्यवहारोपपत्त्यर्थम-भेदस्यारोपः स्वीक्रियते। आरोपितं मत्वा वास्तविकानां व्यवहाराणामपत्तिः न स्यात् अर्थात् भेदो वास्तविकः, अभेदस्त्वारोपित एव।

निष्कर्षः– तादात्म्ये भेदाभेदयोः सत्वात् वस्तुतः भेदस्यारोपितस्याभेदस्य च सत्वात्।

वैयाकरणाः बोद्धाश्च शब्दार्थौ मन्यन्ते। अतः बुद्धिदेशस्थ एवार्थः शक्यः। स्फोटात्मके पदमपि बौद्धम्। बौद्धाः वह्नदावर्थे दाहादिशक्तिमत्वं नास्ति अर्थात् पदार्थस्य सत्ता बुद्धिदेशे एव। अत एव शब्दज्ञानानुपाती बाह्यार्थरहितः बुद्धिपरिकल्पित इति स्वीक्रियते। अत एवोक्तम्–

**एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः॥**

इत्यत्र वन्ध्यासुतादिनां वाह्यार्थशून्यत्वेऽपि बुद्धावर्थमादायैव प्रातिपदिकत्वम्, प्रातिपदिकत्वात् स्वाद्युत्पत्तिः जायते, अन्यथाऽर्थवत्वाभावेन प्रातिपदिकत्वाभावात् कथं स्वाद्युत्पत्तिः। अत्र शृङ्गे शशीयत्वभ्रमः इति नैयायिकमतमपि न समीचीनम्, शशशब्दवाच्यजन्तुदर्शनरूपबाधे सति शशशृङ्गं नास्तीति वाक्ये शशशृंगमित्यस्य प्रातिपादिकत्वानापत्तेः।"[२१]

अर्थपदयोस्तादात्म्ये तेनार्थेन तादात्म्यमुपगतः सः शब्दोऽपि भिधो भिन्न एव, अतएव अर्थभेदाच्छब्दभेद इत्यादिव्यवहारो दृश्यते। अर्थभेदाच्छब्दभेदस्वीकारे 'अग्नये त्वा जुष्टं निर्वपामि' इत्यत्राग्निशब्दस्य सूर्यरूपार्थे विनियोगकाले प्रयोगदर्शात् अर्थभेदात् शब्दभेदापत्ति चेत्, इष्टापत्तेः।

**मन्त्रास्तु विनियोगेन लभन्ते भेदमूहवत्।**
**तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु॥**[२२]

मन्त्राणां सर्वेषां वेदत्वमेव। तत्र समानाकारमात्रेण तु। एकः शब्दो नानार्थः तदा अथताः पादाः माषाः इति "सरूपाणामेक शेष एकविभक्तौ"[२३] इति सूत्रस्थं भाष्यं विरूद्ध्येत। तदर्थमाचार्यैः

२०. प.ल.म. पृ. २५
२१. तत्रैव पृ. २९
२२. वा.प. पदकाण्डम् २/२५८–५९
२३. पा.अ. १/२/६४

आनुपूर्व्याः ऐक्यमात्रेण शब्दस्य एकत्वव्यवहारात्, न भाष्यासङ्गति, कश्चनपि दोषो न।

वाच्यवाचकभावरूपा शक्तिः साधुष्विवापभ्रंशेष्वपि मन्यते। यथोक्तम् महाभाष्ये–

"एकैकस्य शब्दस्य बहवोऽपभ्रंशाः"[२४]। तथा च शक्तिग्राहकशिरोमणेः व्यवहारस्य शब्दापशब्देष्वपि शब्देषु तुल्यत्वात् असाधुशब्देष्वपि शक्तिं स्वीकुर्वन्ति। तस्य प्रवृत्तिं दृष्ट्वा पूर्वजन्मनि अनुभूतायाः शक्तेः स्मरणं विधीयते। पूर्वजन्मानुभूतशक्तिस्मरणादेव सद्यो गृहीतजन्मनां तथा जडानां पशुपक्ष्यादीनाञ्च पदार्थसम्बन्धज्ञानं भवति। यतो हि जन्मकाले एव शक्तिज्ञानसम्भवो न।

नैयायिकाः साधुषु शब्देषु शक्तिमुरीकुर्वन्ति परञ्चासाधुशब्देन साधुस्मरणद्वाराऽर्थबोधः स्वीक्रियते। परञ्च वैयाकरणा इदं न स्वीकुर्वन्ति साधुस्मरणं विनापि बोधानुभवात्, तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च। अत एव स्त्रीशूद्रबालादीनामुच्चरितत्वे सति साधुशब्देषु - अर्थविषयक सन्देहे च सति साधुशब्दस्यापभ्रंशैः शब्दैरर्थस्य निर्णयः स्पष्टः। सामान्यज्ञानवतां जनानां बालानामशक्त्या शुद्धं संस्कृतोच्चारणं नैव कुर्वन्ति। अतस्तैरुच्चारितैः शब्दैः विदुषां ज्ञाने सन्देहो चोत्पद्यते। अतः अपभ्रंशशब्दैः साधु-स्मरणेनाऽर्थबोधो जायते।

यद्यप्यभ्रंशवाचका न स्युस्तर्हि तत्प्रयुक्तैः शब्दैः कथमर्थनिर्णयो भवेत्। अर्थात् अपभ्रंशेष्वपि शक्तिः विद्यते। अतएव भाष्ये–"समानायामर्थावगतैश्शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः"[२६] इत्याकूतम्। तथा च भर्तृहरिणाऽपि

"वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।"[२७] इत्युक्तम्। मीमांसाशास्त्रस्यार्यम्लेच्छाधिकरणस्य सङ्गति र्भवति। तदधिकरणे आर्याः यवं दीर्घशूकविषये प्रयुञ्जन्ते, किञ्च म्लेच्छाः जनाः प्रियङ्गौ प्रयुञ्जन्ते। तथाप्यार्येषु बलवत्वाद् वेदे दीर्घशूकपरतयाऽर्थो कृतः। केवलं साधुशब्देषु शक्तिं स्वीकुर्वाणानां नैयायिकानां दृष्ट्या म्लेच्छान् यववोधः शक्तिभ्रमाद् भवति। तथा च शुक्तौ रजतत्वभ्रमवान् पुरुषस्तेन रजतेन किञ्चिदपि कार्यं कर्तुं न प्रभवति। तस्य ज्ञानं न किमपि साधकं भवति तथैव म्लेच्छप्रसिद्धिः भ्रममूलिका वस्त्वसाधिका। तथा च यत्र द्वयोः पदार्थयोः समवधानं भवति तत्रैवैकस्य बलवत्ता, अपरस्य दौर्बल्यं भवति। अत्र च म्लेच्छानां प्रसिद्धिर्भ्रममूलिका। अतः सा वस्त्वसाधिका। अतः द्वयोः तुल्यत्वे सति विचारस्यावसर एव न।

**वाच्यवाचकरूपाशक्तिः त्रिधा। योगः योगरूढिः, रूढिश्चेति।** यथा–

---

२४. म.भा. पश्पशाह्निकम्

२५. व.

२६. म.भा. पश्पशाह्निकम्

२७. वा.प. वाक्यकाण्ड म्३/३/३०

शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः, यथा पाचकादौ। शास्त्रकल्पितावयवार्थान्वितविशेष्य-भूतार्थनिरूपिता शक्तिर्योगरूढिः, पङ्कजपदे शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढिः, यथा मणिनूपुरादौ।"[२८] अयमाशयः पङ्कजपदेन पद्मबोधो जायते अर्थात् यत्रावयवशक्तेः समानाधिकरणसमुदायशक्तिः वर्तते। यथा पङ्कात् जायते इति पङ्कजम् पद्मम्। अयमर्थः अवयवसमुदायाभ्यां प्रतीयेत, तत्रैव योग्रूढिः स्वीक्रियते तथा च यत्र पङ्कजशब्दः लक्षणया पद्मविशेषः बोधो जायते, तत्र योगरूढिः स्वीकारे न दोषः। परञ्च तन्न समीचीनम्। पद्मेऽनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना न लक्षणाऽवसरः। भूमौ पङ्कजमुत्पन्नम्, कह्लारकैरवमुखेष्वपि पङ्कजेषु क्वचित् तात्पर्यग्राहकवशात् रूढ्यर्थस्य कुत्रचिद् योगार्थस्य ज्ञानं च जायते। तथा चेदं सर्वं 'आर्हाद्'[२९] इति सूत्रस्थ भाष्यमानम्।

तथा चाश्वगन्धादिपद्मौषधिविशेषे रूढः, तथाश्वगन्धसम्बन्धेन वाजिशालाबोधे यौगिकः। इदं यौगिकरूढं मन्यते। तथा च मण्डपपदोऽपि गृहविशेषार्थे रूढः, तथा मण्डं पिबतीत्यर्थे यौगिकः, अतएव यौगिकरूढ उच्यते। अतोऽतिरिक्तभेदाः न सन्ति।

इयं वाच्यवाचकभावशक्तिः नानार्थकशब्देषु नियम्यते। तद्यथा–

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।**[३०]

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**[३१]

एते चतुर्दशसंयोगादयः नानार्थेषु शब्देषु शब्दार्थस्य सन्देहे तदपाकरणद्वारा विशेषार्थनिर्णायकाः भवन्तीति शम् इत्युक्त्वा विरमामि।

---

२८. प.ल. मंजूषा पृ. ३७
२९. पा.सू. ६/१/१९
३०. वाक्यपदीयम् पदकाण्डम् २/३१७
३१. तत्रैव २/३१८

# न्यायदर्शनदिशा सृष्टिविमर्शः

**डॉ. रामचन्द्रशर्मा**

अहो! धन्योऽयं भारतवर्षो यत्र अनादिकालात्परम्परया प्रवर्तमानेषु चिरन्तनारण्यकसत्रेषु भूयो भूयः सृष्टिविज्ञानसिन्धुसमुन्मन्थनपूर्वकसिद्धान्तसुधारससमास्वादनप्रक्रियाप्रवर्तनेन मनीषिभिः लोकानुरञ्जनं पुरुषार्थसिद्धिश्च विधीयते।

**"एकं सद्विप्राः बहुधा वदन्ति"**[१] **"नृणामेको गम्यस्त्वमसि पयसामर्णव इव"**[२] इत्यादिवचनानुरोधेन विभिन्नप्रस्थानैः परमात्मैव प्रस्थीयते। स एव जगदधिष्ठानं कर्त्ता नियन्ता संहर्त्ता चास्ति। अनादिकालात्प्रवर्तितस्य नवनवायमानैर्विविधैः रूपैश्चित्रितस्यास्य जगच्चलचित्रस्य स्वरूपसम्प्ररोहः कथं सञ्जायतेऽत्रविषये मनीषिणो विशेषण तस्य बोधाय वादकथामाश्रित्य परस्परं विचारविनिमयं कुर्वन्ति। अचिन्त्यरचनारूपस्यास्य जगतः स्वरूपं सम्पश्यन्तः सर्वेऽपि आश्चर्यचकिता भवन्ति। यथोक्तम्—

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः, श्रृणोति, श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥**[३]

वस्तुतोऽप्रमेयतैव तस्य **"लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीशपारं न याति।"**[४] तथापि एकदेशीयप्रमेयतामाश्रित्य स्वात्मानन्दबोधायैव विदुषां शास्त्रार्थे पृथक्प्रस्थानैः प्रवृत्तिः।

अत्र किल सृष्टिप्रक्रियाप्रकारप्रदर्शककार्यकारणभावमूलकाश्चत्वारः सम्प्रदायाः दार्शनिकजगति प्रसिद्धाः सन्ति—

**१. "असतः सज्जायते"** इति। असतः सत्तारहिताच्छून्यादिदं सत्–अर्थक्रियाकारि प्रतीत्यसमुत्पन्नं क्षणिकं जगज्जायत इति सौगताः।

---

१. ऋगवेदसंहिता १.१६४.४६
२. महिम्नस्तोत्रम्–७
३. श्रीमद्भगवद्गीतायाम्–२–२९
४. महिम्नस्तोत्रम्–३२

२. **"सतोऽसज्जायते"** इति। सतः–एकस्मात्सजातीयविजातीयस्वगतभेदशून्याद् ब्रह्मणः, असत् सदसद्भ्यामनिर्वचनीयं व्यावहारिकसत्तया प्रतीयमानं परमार्थतः प्रातीतिकमिदञ्जगज्जायत इत्यौपनिषदाः।

३. **"सतः सज्जायते"** इति। सतः–अव्यक्तात् त्रिगुणसाम्यावस्थारूपात् सत्–तस्मिन्नेवाव्यक्त–रूपेणाधिष्ठितं सदभिव्यक्तिभावमापन्नमिदं त्रिगुणवैषम्यरूपं जगज्जायत इति कापिलाः।

४. **"सतोऽसज्जायते"** इति। सतः– नित्यपरमाणोः, असत्–अनित्यम् अवयविभावापन्नमिदं जगज्जायत इति तार्किकाः।

एषु तार्किकमतं पुरस्कृत्य सृष्टिप्रक्रियास्वरूपविमर्शः प्रस्तूयते। न्यायवैशेषिकौ समानसिद्धान्तप्रतिपादकत्वात्समानतन्त्रौ तार्किकतया सम्प्रसिद्धौ। तत्र प्रशस्तपादाभिहितरीत्या सृष्टिप्रक्रियास्वरूपमित्थं विज्ञेयम्–

सृष्टेः प्रलयपूर्वकत्वात् तन्मतानुसारं पूर्वं प्रलयप्रक्रिया पश्चात् सृष्टिप्रक्रिया बोध्या। ज्योतिषशास्त्रीयकालगणनानुसारं जगत्कर्तुर्हिरण्यगर्भस्य शतवर्षात्मकायुःपूर्णतानन्तरं तस्यापवर्गकाले संसारखेदखिन्नानां सर्वेषां प्राणिनां कालनिशाविश्रामार्थं सकलब्रह्माण्डाधिपतिमहेश्वरस्य संसारसंहारेच्छया यदा सर्वप्राणिनां शरीरेन्द्रियमहाभूतोत्पादकानां सर्वात्मसु समवायेन विद्यमानानां तत्तत्फलानुकूलानां तत्तददृष्टानां युगपद् वृत्तिनिरोधो जायते तदा आत्माणुसंयोगजेभ्यः कर्मभ्यः शरीरेन्द्रियकारणभूतानां परमाणूनां विभागेन तत्तत्संयोगानां विनाशे सति तत्तदवयविजनकतत्तत्संयोगात्मकासमवायिकारणनाशात् अवयविद्रव्यविनाशो जायते, तथा च पृथिवीजलतेजोवायुरूपाणां चतुर्ण्णां महाभूतानां यथोत्पत्तिक्रमं क्रमेण उत्तरस्मिन्नुत्तरस्मिन्नधिकरणे पूर्वपूर्वस्य विनाशो जायते। तदनन्तरं विभक्ताः चतुर्भूतपरमाणवो निष्पन्दास्समवतिष्ठन्ते। स्वस्वधर्माधर्मानुविद्धा आत्मानोऽपि तावत्कालपर्यन्तम् अव्यक्तात्मानास्सन्तिष्ठन्ते इत्येषा प्रलयप्रक्रिया विज्ञेया।[५]

तादृशप्रलयकालानन्तरम् अव्यक्तानां प्राणिनां स्व–स्वकर्मानुसारं भोगसिद्ध्यर्थं जगत्कर्तुर्महेश्वरस्य संसारसर्जनेच्छानन्तरं सर्वेषु जीवात्मसु विद्यमानानां तत्तदृष्टानां स्वरूपवृत्तिलब्ध्यनन्तरं तादृशादृष्टविशिष्टतत्तदात्मसंयोगेभ्यः सर्वप्रथमं पवनपरमाणुषु स्पन्दो जायते, तेषां परस्परसंयोगेभ्यः द्व्यणुकादिक्रमेण जलीयपरमाणुभ्यः पूर्वक्रमेणैव महान् समुद्रः समुत्पन्नः सन् तरङ्गायितस्तिष्ठति। ततः तस्मिन्नेव महोदधौ पार्थिवेभ्यः परमाणुभ्यः पृथिवी अवयवयोगिनी संहता समवतिष्ठते। तत्रैव तैजसभ्योऽणुभ्यः तेनैव क्रमेण समुत्पन्नो महाँस्तेजोराशिः केनचिदनभिभूतत्वाद् देदीप्यमानस्तिष्ठति।

अनेन क्रमेण चतुर्ण्णां भूतानां समुत्पत्त्यनन्तरं परमात्मनः सङ्कल्पमात्रात् पार्थिवपरामाणुसहितेभ्यः तैजसाणुभ्यो महदण्डस्य समुत्पत्तिर्जायते। तस्मिन्नण्डे तदधिष्ठातृत्वेन हिरण्यगर्भाख्यं सूत्रात्मानं समुत्पाद्य

---

५. प्रशस्तपादभाष्यम् पृ. १२१.२६१

परमेश्वरः प्रजासर्गे विनियोजयति। स च विधाता तेन विनियुक्तः सन् अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनाम् अदृष्टानुसारं तत्तत्कर्मफलं विज्ञाय तत्तत्कर्मानुरूपज्ञानभोगायुषः समुत्पादयन् मानसान् सुतान्, प्रजापतीन्, मनुष्यदेवर्षिपितृगणान् समुत्पादयति। मुखबाहुरूपादेभ्यः ब्राह्मणादिचतुरो वर्णान् समुत्पादयति। एवमेवान्यस्य प्राणिवर्गस्य सृष्टिं विदधाति, तत्संस्कारानुरूपधर्मज्ञानवैराग्यैश्वर्यादिकञ्च प्रतिपादयति।[६]

इत्थं तार्किकमतानुसारं सृष्टिप्रक्रियायाः स्वरूपं विज्ञेयम्। अत्र विषये केचिद्दार्शनिकाः परमाणूनां नित्यास्तित्वं नाङ्गीकुर्वन्ति। तन्मतनिरसनाय तार्किकैः परमाणुसत्ता संसाध्यते। परमाणुस्वरूपविषये सुप्रसिद्धा उक्तिरस्ति यत्–

**जालसूर्यमरीचिस्थं सूक्ष्मं यद्दृश्यते रजः।**
**तस्य षष्ठतमो भागः परमाणुः स उच्यते॥**[७]

तात्पर्यमिदं यत् यत्र कुत्रचित् प्रकोष्ठादौ कुतश्चिच्छिद्रात् सूर्यप्रकाशः संक्रमन् भासते, तत्र तस्मिन् प्रकाशे सूक्ष्माः रजःकणाः इतस्ततः परिभ्रमन्तो दृश्यन्ते। ते त्रुटिपदवाच्याः त्रसरेणवो विज्ञेयाः। तस्य त्रसरेणोः षष्ठतमो भागः परमाणुरिति विज्ञेयम्। तथा चैकस्मिन् त्रसरेणौ द्व्यणुकत्रयं तिष्ठति। द्व्यणुके च परामणुद्वयमिति विज्ञेयम्। परमाणुश्च अन्तिमोऽवयवो निरवयवो नित्योऽङ्गीकार्य एव। **"परं वा त्रुटेः"**[८] इति न्यायसूत्रकारेणेदं तथ्यं विज्ञापितम्। **"त्रुटिस्त्रसरेणुरिति पर्यायाः"**[९] इति तात्पर्यटीकाकाराः। त्रुटेः परं यः परमाणुरिति सूत्रार्थः। अत्र भाष्यकारः– **"अवयवविभागस्यानवस्थानात् द्रव्याणामसंख्येयत्वात् त्रुटित्वनिवृत्तिः"** इति विवृण्वन् स्पष्टयति यत् यदि अवयवविभागस्य परमाणौ समाप्तिर्न स्यात् तदा तदवयवानामसंख्येयत्वात् त्रसरेणोः त्रुटित्वस्य सूक्ष्मत्वस्य निवृत्तिस्स्यात्! तथा सति मेरुसर्षपयोरपि अवयवानन्त्यात्साम्यं स्यात्। तथा चेदमवधेयं यत्– परमाणोरपि सावयवत्वेऽनित्यत्वे च अनवस्था, अनन्तावयवत्वेन मेरुसर्षपयोः साम्यावस्थाप्रसङ्गः, असमवेतभावकार्योत्पत्तिप्रसङ्गश्च सम्पद्यते। अतस्तस्य निरवयवत्वं नित्यत्वञ्चाङ्गीकर्त्तव्यम्। न च त्रसरेणावेवाणुतारतम्यविश्रान्तिरस्त्विति वाच्यम्–**"त्रसरेणु सावयवः चाक्षुषद्रव्यत्वात्, घटवत्"**[१०] इत्यानुमानेन तस्य सावयवत्वसिद्धिः। द्व्यणुक एव विश्रान्तिरस्त्वित्यपि न युक्तम् **"त्रसरेणारवयवाः सावयवाः, महदारम्भकत्वात्, कपालवत्"**[११] इत्यानुमानेन तस्य सावयवत्वसिद्धिः। अतस्तद्भिन्नः नित्यः परमाणुरङ्गीकार्य एव, यं समवायीकृत्य द्व्यणुकादिस्थूलान्तानां सावयवद्रव्याणां समुत्पत्तिर्जायते।

६. तत्रैव पृ. १२७–३१
७. मुक्तावलीप्रभाटीकायामुद्धृतम्–पृ. ८१
८. न्यायसूत्रम् ४.२.१७
९. न्यायवार्त्तिकतात्पर्यटीका। पृ. ६४७
१०. न्यायसिद्धान्तमुक्तावलीप्रत्यक्षखण्डः। पृ. ९१
११. तत्रैव

ते च परमाणवः सृष्ट्यादौ तत्तददृष्टविशिष्टात्मसंयोगात्स्पन्दते इति पूर्वमुक्तम्। तत्र कैश्चित्-अदृष्टस्य सत्ता नाङ्गीक्रियते। ते स्वाभाविकं जगतो वैचित्र्यमङ्गीकुर्वन्ति। तन्मतनिरसनाय अदृष्टस्य सिद्धिः तार्किकैः क्रियते। तथाहि-

**सापेक्षत्वादनादित्वाद् वैचित्र्याद् विश्ववृत्तितः।**
**प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः॥**[१२]

अत्र पञ्चभिर्हेतुभिर्जगत्सर्जकस्य कस्यचिदलौकिकस्य हेतोः सिद्धिः कृता विद्यते। तत्र सर्वप्रथमं जगत आकस्मिकत्वं स्वाभाविकत्वं च परिहर्त्तुं सामान्यकार्यकारणभावः संसाध्यते। तथाहि-**"कार्यं सहेतुकं सापेक्षत्वात् भोजनजन्यतृप्तिवत्"**, सापेक्षत्वन्नाम कादाचित्कत्वं, तच्च कदाचित्कुत्रचिज्जायमानत्वम्। तथा च यथा- भोजनजन्यतृप्तिः सति भोजने भवति, असति च न भवति, अत एव कादाचित्का, **"यत्सत्त्वे यत्सत्त्वं यदभावे यदभावः, तस्य तम्प्रति कारणत्वं सिद्ध्यति"** इत्येवं सा भोजनहेतुका अनुभवसिद्धा, तथैव प्रागभावप्रतियोगित्वेन भासमानं कार्यं घटपटादिरूपं कादाचित्कत्वात् सहेतुकं ग्राह्यम्, तच्च दण्डचक्रादिसत्त्वे जायमानं तद्धेतुकं सिध्यति। न च घटादिकं प्रति दृष्टं दण्डादिकारणमस्तु, नैतेन संसारं प्रति कस्यचिददृष्टस्यालौकिकस्य हेतोः सिद्धिर्भवतीति शङ्कनीयम्। **"कार्यं विचित्रहेतुकं, विचित्रकार्यत्वात्, मयूरपिच्छादिवत्"** यथा मयूरपिच्छं विचित्ररूपं स्वोत्पादकं विचित्राण्डरसं गमयति, तथैवोच्चावचमिदं विचित्रं जगदपि स्वोत्पादकं किमप्यलौकिकं कारणं गमयति, तदेव अदृष्टसंज्ञकं धर्माधर्मात्मकमलौकिकं कारणमवगन्तव्यम्। अत एवोच्यते। **"सर्वमेव हि कार्यजातमदृष्टाधीनम्।"**[१३] तथा च प्राण्यदृष्टवशादेव जगदुत्पत्तिः नान्यथा। एतेन स्वभाववादः, शून्यकारणतावादः, एककारणतावादः एते निरस्ता भवन्ति, जगद्वैचित्र्यानुपपत्तेः। यथोक्तम्-

**एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।**
**शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः॥**[१४]

इत्थमदृष्टसत्ता स्वीकार्यैव। तच्चादृष्टम् अचेतनम्। अचेतनस्य चेतनाधिष्ठितस्यैव कार्यजनकत्वात्, तदधिष्ठातृत्वेन ईश्वरोऽप्यङ्गीकार्य एव। यस्येच्छाया प्रयुक्तः प्राण्यदृष्टवृत्तिलाभः। न च जीवाधिष्ठितमेवादृष्टं कार्यजनकं स्यादिति वाच्यम्। लब्धवृत्तिकादृष्टविशिष्टजीवस्यैवान्तःकरणादिवैशिष्ट्यं कल्पयितुं युक्तम्। अतः जीवात्मवृत्तिनोऽदृष्टस्य वृत्तेः प्रयोजिकायाः इच्छाया आश्रयः कश्चिदन्यः चेतनः स्वीकार्य एव।

---

१२. न्यायकुसुमाञ्जलिः १.४
१३. न्यायसिद्धान्तमुक्तावली पृ. ९९
१४. न्यायकुसुमाञ्जलिः १.७

स एवेश्वरः। अत एवोक्तम्–**"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"**[१५] इति। तस्य चेश्वरस्य सिद्धिः विविधैरनुमानैराचार्येण विहिता। तद्यथा–

**कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।**
**वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥**[१६]

विश्वं वेत्ति इति विश्ववित्–विश्वविषयकज्ञानवान् **"यः सर्वज्ञः सर्ववित्"**[१७] इत्यादिश्रुतेः। तथा चात्र विश्वविषयं ज्ञानं विशेषणं ज्ञानवाँश्च विशिष्टः विशेषणविशिष्टस्यैव अव्ययत्वसाधनेन विशेषणविशेष्ययोरुभयोरपि अव्ययत्वसिद्धौ ईश्वरस्य तद्विशेषणीभूतसर्वविषयकज्ञानस्य तत्सम्बन्धस्य च नित्यत्वमव्याहतमिति समवधारणीयम्। **"तद्वचनादाम्नायस्य प्रामाण्यम्"**[१८] अर्थात् ईश्वरप्रोक्तत्वात् वेदस्य प्रामाण्यमव्याहतम्। तथा च तेनापि तत्स्वरूपबोधः। तद्यथा–

**विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।**
**सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥**[१९]

अपि च–

**यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै।**
**तँ हे देवमात्मबुद्धिप्रकाशं, मुमुक्षुर्वै शरणमहं प्रपद्ये॥**[२०]
**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमदुच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥**
**॥ॐ शान्तिः, शान्तिः, शान्तिः॥**

**समुद्धृतग्रन्थसूची–**

१. प्रशस्तपादभाष्यम् (न्यायकन्दली), सं.सं., वि.वि., वाराणसी, १९९९

२. न्यायसिद्धान्तमुक्तावली (प्रभा), व्यासप्रकाशन, वाराणसी, १९९०

३. ऋग्वेदसंहिता।

---

१५. न्यायसूत्रम् ४.१.२०
१६. न्यायकुसुमाञ्जलिः ५.१
१७. मुण्डकोपनिषत् १.१.९
१८. वैशेषिकसूत्रम् १.१.३
१९. ऋग्वेदः १०.८१.३
२०. श्वेताश्वतरोपनिषद् ६.१८

४. महिम्नस्तोत्रम्।

५. न्यायकुसुमाञ्जलिः।

६. श्रीमद्भगवद्गीता।

७. न्यायदर्शनम्।

८. वैशेषिकदर्शनम्।

९. श्वेताश्वतरोपनिषद्।

१०. मुण्डकोपनिषद्।

११. न्यायवर्त्तिकतात्पर्यटीका, राजेश्वरशास्त्रीद्रविडः, चौ.सं. संस्थानम्, वाराणसी १९८९

# याज्ञवल्क्यस्मृतौ प्रतिपादितयोः साधारणासाधारणव्यवहारमातृकयोः मिताक्षरादिशा विश्लेषणम्

**डॉ. सन्तोषकुमारशुक्लः**

अष्टादशविद्यासु परिगणितं धर्मशास्त्रं हि आचारव्यवहारप्रायश्चित्ताध्यायेषु विभक्तम्। तत्र याज्ञवल्क्यस्मृतेः आचाराध्याये एव आदौ धर्मविषयिणी जिज्ञासा कृता–'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः।'[१] तत्र हि धर्मशब्दः षड्विधस्मार्तविषयः। मिताक्षराकारेण तदेवं व्याख्यातम्–वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति।[२]

व्यवहाराध्याये व्यवहारप्रक्रिया व्याख्याता तत्र आदौ एव मिताक्षराकारेण उक्तम्–अभिषेकादि गुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः। प्रजापालनं दुष्टनिग्रहमन्तरेण न संभवति। दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न संभवति। ततो हि व्यवहारदर्शनमहरहः कर्त्तव्यमिति स्मृतिरेषा प्रतिपादयति।[३] क्रतुतुल्यफलं दण्ड्यदण्डने विधीयते।

**व्यवहारान् स्वयं पश्येत्।**
**सभ्यैः परिवृतोऽन्वहम्।।**[४] मिताक्षराकारेण

श्लोकस्यास्य व्याख्यानं कुर्वता लिखितम्–क्रतुतुल्यफलं दण्ड्यदण्डने स्वर्गादिनाशं चादण्ड्यदण्डने सम्यक् विचिन्त्य प्रतिदिनं व्यवहारान् वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत्।[५] राज्ञः कर्त्तव्यमिदं यत् सः स्वधर्माच्चलितान् प्रच्युतान् यथापराधं विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत् यथोक्तम्–

**कुलानि जातीः श्रेणीश्च गणाञ्जानपदानपि।**
**स्वधर्माच्चलितान्राजा विनीय स्थापयेत् पथि।।**[६]

---

१. याज्ञवल्क्यस्मृतिः १/१
२. मिताक्षरा १/१
३. याज्ञवल्क्यस्मृतिः १/३५९
४. मिताक्षरा १/३६०
५. याज्ञवल्क्यस्मृतिः १/३६०
६. याज्ञवल्क्यस्मृतिः १/३६१

दुर्वृत्तेषु वञ्चकशब्दधूर्तपरदार–परद्रव्यापहारिहिंसकारिदषु नृपो दण्डं पातयेत् प्रयाजयेत् हि यस्माद् धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः। तस्य च 'दण्ड' इति यौगिकी संज्ञा यथोक्तं गौतमेन–'दण्डो दमनादित्याहुः तेनादान्तान् दमयेत्'।[७]

**स्वाम्यमात्या जनो दुर्गं कोशो दण्डस्तथैव च।**
**मित्राण्येताः प्रकृतयः राज्यं सप्ताङ्गमुच्यते।।**
**तदवाप्यनृपोदण्डं दुर्वृत्तेषु निपातयेत्।**
**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा।।**[८]

सच दण्डो द्विविधः



शारीरः अर्थदण्डश्चेति

अत्र नारदेन प्रोक्तं यत्–

शारीरश्चार्थदण्डश्च दण्डो हि द्विविधः स्मृतः।

**शारीरस्ताऽनादिस्तु मरणान्तः प्रकीर्तितः।।**
**काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च।**

यद्यपि अपराधानुसारेण द्विविधोऽपि दण्डः अनेकधा भवति–

**शरीरो दशधा प्रोक्तः। ह्यर्थदण्डस्त्वनेकधा।।**[९]

महर्षिणा याज्ञवल्क्येन तु स्मृतौ चतुर्विधाः दण्डाः प्रतिपादिताः–

**धिग्दण्डस्त्वध वाग्दण्डो धनदण्डो वधस्तथा।**
**योज्याः व्यस्ताः समस्ता वा ह्यपराधवशादिमे।।**[१०]

धिग्दण्डः कुत्सनम्, वाग्दण्डः परुषशापवचनात्मकः, धनदण्डो धनापहारात्मकः, वधदण्डो शरीरोऽवरोधादिजीवितान्तः। एते चतुर्विधाः दण्डाः व्यस्ताः एकैकशः समस्ताः द्वित्राः त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः। अत्र मनुना प्रोक्तं यत्–

---

७. गौतमधर्मसूत्रम् ११/१२८
८. याज्ञवल्क्यस्मृतिः १/३५३–३५४
९. मिताक्षरा १/३६१
१०. याज्ञवल्क्यस्मृतिः १/३६७

**धिग्दण्डः प्रथमे कुर्यात्। वाग्दण्डं तदनन्तरम्॥**
**तृतीये धनदण्डं तु। वधदण्डमतः परम्॥**[११]

यथापराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनं कर्त्तव्यमिति दण्डव्यवस्थानिमित्तानि याज्ञवल्क्येन प्रतिपादितानि–

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्॥**[१२]

राज्ञः परमं कर्त्तव्यं व्यवहारदर्शनमिति। स च व्यवहारः कीदृशः, कतिविधः कथं चेतीतिकर्त्तव्यताकलापः। तदभिधानाय उच्यते–

**व्यवहारान् नृपः पश्येत् विद्वद्भिः ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः॥**[१३]

अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः। यथा कश्चिदिदं क्षेत्रादि मदीदमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति। व्यवहारशब्दस्य अनेकाः परिभाषाः धर्मशास्त्रेषु वर्णिताः–

**१. विनानार्थेऽव सन्देहे हरणं हार उच्यते।**
**नानासन्देहहरणाद् व्यवहार इति स्मृतः॥**[१४]

२. ऋणादानादिनाना विवादापदविषयः निराक्रियतेऽनेनेति नाना संशयहारी विचारः व्यवहारः।[१५]

**३. प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे।**
**साध्यमूलस्तु यो वादो व्यवहारः स उच्यते॥**[१६]

४. प्रयत्नसाध्ये कष्टसाध्ये गृहक्षेत्रादिके विषये विच्छिन्ने स्वेच्छया भोक्तुमशक्ये सति न्यायविस्तरे न्यायः प्रमाणं विस्तीर्यते प्रपञ्च्यते निर्णीयते यस्मिन् तस्मिन् धर्माख्ये धर्मनामके धर्माधिकरणमिति प्रसिद्धे सभा-लक्षणे स्थले साध्यमूलको यो गृहक्षेत्रादिविषयो वादः स व्यवहार इति।[१७]

---

११. मनुस्मृतिः ७/१
१२. याज्ञवल्क्यस्मृतिः १/३६८
१३. याज्ञवल्क्यस्मृतिः २/१
१४. मनुस्मृतिः ८/१
१५. दीपकलिका पृ. ३६
१६. अपरार्कः पृ. ५९६
१७. व्यवहारप्रकाशः पृ. ३-४

**५. स्वधनस्य यथा प्राप्तिः परधर्मस्य वर्जनम्।**
**न्यायेन यत्र क्रियते व्यवहारः स उच्यते।।**[१८]

मिताक्षराकारेण तु 'व्यवहारपदं' इति व्याख्यता लिखितं यत् धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैः आधर्षितः अभिभूतो यद् राज्ञे प्राड्विवाकाय वा आदेवयति चेद्यदि तद् आवेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः तस्य पदं विषयः।[१९] यथोक्तं याज्ञवक्ल्यस्मृतौ–

**स्मृत्याचार व्यपेतेन मार्गेणाऽऽधर्षितः परैः।**
**आवेदयति चेद् राज्ञे व्यवहारपदं हि तत्।।**[२०]

व्यवहारविषयो द्विविधः




यथोक्तं नारदेन[२१]–

**अधियोगस्तु विज्ञेयः शंकातत्त्वाभियोगतः।**
**शंकाऽसतां तु संसर्गात् तत्त्वं होदाभिदर्शनात्।।**

तत्त्वाभियोगं समुदाहरति यत् यथा– "मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति", क्षेत्रादिकं ममायमपहरति चेति अयंरूपः तत्त्वाभियोगः। यथोक्तं कात्यायनेन–

**न्याय्यं स्वं नेच्छते कर्त्तुम्।**
**अन्याय्यं वा करोति यः।।**[२२]

स पुनः तत्वाभियोगः अष्टादशधा भिद्यते–

---

१८. स्मृतिचन्द्रिका पृ. २
१९. मिताक्षरा २/५
२०. याज्ञवल्क्यस्मृतिः २/५
२१. नारदस्मृतिः १/२७
२२. कात्यायनस्मृतिः

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**संभूय च समुत्थानं दत्तस्यानपकर्म च॥**

**वेतनस्यैव चाऽदानं संविदश्च व्यतिक्रमः।**
**क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥**

**सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।**
**स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥**

**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।**
**पदान्यष्टादशैतानि व्यवहारास्थिताविह॥**[२३]

याज्ञवल्क्यस्मृतौ तु विंशति विषयाः प्रतिपादिताः। एकस्तु अभ्युपेत्याशुश्रूषा अन्यस्तु प्रकीर्णकः। इत्थं प्रायः सर्वासु स्मृतिषु एते विषयाः विवेचितः। एतानि अष्टादश विवादपदानि साध्यभेदेन पुनः बहुत्वं गतानीति नारदस्मृतौ उक्तम्–

**एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत्।**
**क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते॥**[२४]

सर्वे व्यवहारविषयाः न्यायिकविधिना न्यायालयेषु विचार्यते। तत्र व्यवहारोऽयं चतुष्पादिति विवादेषु उपदर्श्यते। यथोक्तं याज्ञवल्क्येन–

**चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः**[२५]

व्यवहारः सोऽयमित्थं चतुष्पाद् चतुरंशकल्पनया विवादेषु ऋणादानादिषु उपदर्शितः। तत्र प्रत्यर्थिनोऽग्रतो लेख्यमिति भाषापादः प्रथमः। श्रुतार्थस्योत्तरं लेख्यम् इति उत्तरपादो द्वितीयः। ततोऽर्थी लेखयेत् सद्यः इति क्रियापादस्तृतीयः १. तत्सिद्धौ सिद्धिमाप्नोतीति चतुर्थः साध्यसिद्धिपादः। यथोक्तम्–

**परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।**
**वाक्यन्यायाद् व्यवस्थानं व्यवहार उदाहृतः॥**
**भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः।**
**आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते॥**[२६]

---

२३. मनुस्मृतिः ८-४-७
२४. नारदस्मृतिः २.८
२५. याज्ञवल्क्यस्मृतिः २/८
२६. मिताक्षरा २/८

सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधाय क्वचिद्व्यवहारविशेषे असाधारणमातृकामुपपादयति।

**अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।**
**अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत्।।**[२७]

**कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च।**
**उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये।।**[२८]

अभियोगकाले प्रक्रियेयं न्यायालयेन प्रतिपाद्यते।

उत्तरपादलेखने कालप्रतीक्षणे अपवादं प्रतिपादयन् आचार्यः वर्णयति यत् साहस–स्तेथ–पारुष्य–गोऽभिशापात्यये स्त्रियाँ वा चारित्रविवादे स्वत्वविवादे एव सद्यः एव विवादयेत् न तु कालप्रतीक्षणं कुर्यात्। अन्यत्र विवादान्तरेषु उत्तरदानकालः इच्छया अर्थिप्रत्यर्थिसभ्यसभापतीनां स्मृतः। यथोक्तम्–

**साहसस्तेयपारुष्यशोभिज्ञापात्यये स्त्रियाम्।**
**विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः।।**

इत्थं राज्ञा छलं निरस्य भूतेन वस्तुतत्त्वानुसारेण व्यवहारान् अन्तं नयेत्। यस्माद् भूतमपि अनुपन्यस्तं हीयते व्यवहारेण साध्यादिभिः। तस्माद् भूतानुसरणं कर्त्तव्यम्।[२९] यथा अर्थी प्रत्यर्थी सत्यमेव वदतः तथा ससभ्येन सभापतिना यतितव्यं सामादिभिः उपायैः। तथा सति साक्ष्यादिनैरयेक्ष्येणैव निर्णयो भवति। अथ सर्वथापि भूतानुसरणं न कर्त्तुं शक्यते तथा सति साह्यादिभिः निर्णयः कार्यः। यथोक्तं–

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते।।**

धर्मशास्त्रे च केचन असिद्धव्यवहारिणः इत्यपि सम्यक् विवेचितम्–

**मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः।**
**असंबद्धमृतश्चैव व्यवहारो न सिद्धयति।**

अपि च मत्तः मदनीहयद्रव्येन उन्मत्तः पञ्चविधेन उन्मादेन वात्तपित्तश्लेष्मसंनिपात–ग्रहसंभवेनोपस्रष्टः। आर्तो व्याध्यादिना, व्यसनं इष्टवियोगोऽनिष्टप्राप्तिजनितं दुःखं तद्वान् व्यसनी। बालो व्यवहारायोग्यः। भीतोऽरातिभ्यः। आदिग्रहणेन पुरराष्ट्रादिविरुद्धः। एतैः योजितः व्यवहारो न

२७. याज्ञवल्क्यस्मृतिः २/९
२८. याज्ञवल्क्यस्मृतिः २/१०
२९. याज्ञवल्क्यस्मृतिः २/३२

सिद्धयति। अथ च असंबद्धकृतोऽपि व्यवहारो न सिद्धयतीति यथोक्तम्[३०]–

**गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः।**
**विरोधे तु मिथः तेषां व्यवहारो न सिद्धयति॥**

एवं रूपेण राज्ञा अहरहः धर्मशास्त्रानुसारेण न तु अर्थशास्त्रानुसारेण व्यवहारदर्शनं कर्त्तव्यम्। देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वात् न पृथक् उपादानम्।

यथोक्तं महर्षिणा–[३१]

**निजधर्माविरोधेन यस्तु सामयिको भवेत्।**
**सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥**

३०. याज्ञवल्क्यस्मृति-मिताक्षरा-२/३२
३१. याज्ञवल्क्यस्मृतिः २/१८६

# प्रशस्ते ज्यौतिषे शस्तं छायागणितगौरवम्

**डॉ. हंसधरझा**

**आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम्।**
**धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥**[1]

इत्यत्र स्पष्टं यन्मानवमात्रस्य कृते धर्मपालनमनिवार्यम्। धर्मस्य मूलं वेदः। उक्तञ्च भगवता मनुना "वेदोऽखिलो धर्ममूलम्" इति।[2] अस्य च धर्ममूलकस्य वेदस्य षट् अङ्गानि सन्ति– व्याकरणं, निरुक्तं, कल्पः, शिक्षा, छन्दो, ज्यौतिषञ्च।[3] तत्राङ्गेषु ज्योतिषं प्रमुखमङ्गं, येन विना वेदविहितयज्ञादीनामनुष्ठानं नैव सम्भवम्। यथोक्तमपि भास्कराचार्येण[4]–

**वेदात्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥** इति॥

पुनश्च तत्रैव[5]–

**वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।**
**संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किञ्चित्करः॥** इति।

एवमेव वृद्धवसिष्ठसिद्धान्तेऽपि कथयति[6]–

**वेदस्य चक्षुः किल शास्त्रमेतत् प्रधानताङ्गेषु ततोऽर्थजाता।**
**अङ्गैर्युतोऽन्यैः परिपूर्णमूर्तिश्चक्षुर्विहीनः पुरुषो न किञ्चित्॥** इति।

वृद्धवसिष्ठेन तु ज्योतिषशास्त्रस्याध्ययनं धर्मार्थयशोमोक्षसाधकं भवतीति स्पष्टमुक्तम्[7]–

---

१. हितोपदशेः मित्रलाभः श्लो. २४
२. मनुस्मृतिः, अ. २, श्लो. ६
३. सिद्धान्तशिरोमणिः, गणि. मध्य.कालमा.श्लो. १०
४. तत्रैव, श्लो. ९
५. तत्रैव, श्लो. ११
६. तत्रैव, श्लो. ११ (नृसिंहदैवज्ञकृतवार्तिके)
७. तत्रैव

**अध्येतव्यं ब्राह्मणैरेव तस्माज्ज्योतिश्शास्त्रं पुण्यमेतद्रहस्यम्।**
**एतद्बुध्वा सम्यगाप्नोति यस्मादर्थं धर्मं मोक्षमग्र्यं यशश्च॥** इति।

अतो नात्र सन्देहो यच्छास्त्रमिदं लोकपरलोकोभयसाधकमिति। अस्य माहात्म्यमुद्गिरन् महात्मा लगधः लिखति[८]

**यथा शिखा मयूराणां नागानां मणयो यथा।**
**तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम्॥** इति।

वस्तुत इदं खलु ज्योतिषशास्त्रं कालविधानशास्त्रं जगतश्शुभाशुभावगमकशास्त्रञ्च। कालज्ञानेऽथवा शुभाशुभावगमने मुख्यं भवति ग्रहः। अर्थात् सूर्यादिग्रहाणां चारादिवशेनैव कालज्ञानं शुभाशुभावगमनं वा जायते। अत एव "ज्योतिषां सूर्यादीनां गत्यादिज्ञापकं शास्त्रं ज्योतिश्शास्त्रम्" इति ज्योतिषशास्त्रस्य कृता परिभाषा आचार्यप्रवरेण श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण वाचस्पत्यमितिनामधेये शब्दकोषे।[९]

तत्र ज्योतिषे यतो हि गणितम्मुख्यमस्ति, गणितबलेनैव ग्रहाणां गत्यादिज्ञानं सम्भवम्, अतः केचिदुपर्युक्तलगधवचने 'ज्योतिषं मूर्ध्नि संस्थितम्' इत्यत्र 'गणितं मूर्ध्नि संस्थितम्' इति पाठं स्वीकुर्वन्ति। अर्थाद् गणितन्नाम ज्योतिषशास्त्रमिति आमनन्ति ते। एवं ज्योतिषशास्त्रस्याधारः गणितमस्तीति निर्विवादः। गणितं विना ज्योतिषशास्त्रस्याध्ययनं नैव सम्भवः। अत एव सिद्धान्तशिरोमणौ कथयति भास्कराचार्यः[१०]–

**द्विविधगणितमुक्तं व्यक्तमव्यक्तयुक्तं**
**तदवगमननिष्ठः शब्दशास्त्रे पठिष्ठः।**
**यदि भवति तदेवं ज्योतिषं भूरिभेदम्**
**प्रपठितुमधिकारी सोऽन्यथा नामधारी॥** इति॥

अर्थात् सूर्यादिग्रहचाराद्याधारितं दिव्यदृष्टिभारतीयमहर्षिप्रणीतं सिद्धान्त-संहिता-होरात्मकमिदं खलु ज्योतिषं ग्रहगणिताधारितम्।

प्राचीनेऽत्र ग्रहगणिते खगोलीया विविधा अपि विषया दृश्यन्ते प्रपञ्चिताः, ये खलु नूनमेव भजन्ते वैलक्षण्यम्। त एव विविधा अपि विषया विविधेष्वधिकारेषु विभज्य विवेचिताः सूर्यसिद्धान्तादिग्रन्थेषु प्राच्यैः। यथा– मध्यमाधिकारः, स्पष्टाधिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकार इत्यादयः।

---

८. भारतीयज्योतिषशास्त्रस्येतिहासः, पृ.सं. ४

९. वाचस्पत्यम्, पृ.सं. ३१६३

१०. सिद्धान्तशिरोमणिः, गोला., गोलप्रशंसा, श्लो. ७

तत्र हि निखिलेष्वपि सिद्धान्तग्रन्थेषु त्रिप्रश्नाधिकारचन्द्रग्रहणाधिकारदयस्तथाभूतास्सन्ति केचनाधिकारा यत्र विशेषेण सन्ति प्रपञ्चितानि च्छायागणितानि, यानि खलु नूनमेव सन्ति विलक्षणानि। छायागणितमाध्यमेन ग्रहगणितस्य विविधा अपि विषया: सन्ति प्रपञ्चिता, येषु पलभाद्वारा चरखण्डादिसाधनम्, पलभाद्वारा लम्बांशाक्षांशज्ञानं, मध्यच्छायातो लम्बांशाक्षांशपलभाज्ञानं, मध्यच्छायातो रविसाधनम्, छायावशाद्दिग्ज्ञानं, भूच्छायावशाद् ग्रहणज्ञानमित्यादिविषया विराजन्ते। एवं चाष्टानामक्षक्षेत्राणामपि ज्ञाने मूलरूपेण च्छायागणितमेवास्ति, यतो हि निखिलानामप्यक्षक्षेत्राणां ज्ञाने पलभा मूलमस्ति। तत्र हि पलभानाम द्वादशाङ्गुलशङ्कोश्छायैव। एवञ्च चन्द्रग्रहणे भूभासाधने, तत्रापि ग्रासादिसाधने, सर्वत्रैव मूलरूपेण च्छायागणितमेवास्ति। यथात्रोदाहरणरूपेणोपस्थाप्यन्ते कानिचिज्ज्यौतिषशास्त्रोक्तानि च्छायागणितानि।

**(१) चरखण्डादिसाधने छायागणितम् :-**

जानन्त्येव विज्ञा यद्धोराशास्त्रस्य मूलमस्ति द्वादशभावास्तथा द्वादशभावस्य मूलमस्ति प्रथमं लग्नम्। अर्थादेतल्लग्नमाश्रित्यैव निखिलमपि होराशास्त्रं प्रश्नशास्त्रं वा प्रवर्तते। तस्य च होराशास्त्रमुख्यभूतस्य प्रथमलग्नस्य साधने आवश्यकम्भवति स्वोदयज्ञानम्। स्वोदयज्ञानार्थमपेक्षितम्भवति चरखण्डज्ञानं, तथा तेषाञ्चरखण्डानां ज्ञानं भवति पलभामाध्यमेनैव। यथोक्तं ग्रहलाघवे[११] :-

**मेषादिगे सायनभागसूर्ये दिनार्धभा या पलभा भवेत्सा।**
**त्रिष्ठा हता स्युर्दशभिर्भुजङ्गैर्दिग्भिश्चरार्धानि गुणोद्धृतान्त्या।।** इति।।

अर्थादयनांशसहिते भानौ मेषादौ गतवति सति द्वादशाङ्गुलशङ्कोर्मध्याह्नकालिकी या छाया सा पलभा भवति। सा छाया (पलभा) स्थानत्रये स्थाप्या। तत्र प्रथमस्थाने दशभि:, द्वितीयस्थाने अष्टाभिस्तथा तृतीयस्थाने त्रिहृताभिर्दशभि: संगुण्य त्रीणि चरखण्डानि भवन्ति।

यथा कल्प्यते, स्थानविशेषस्य पलभा = ५.३० अस्ति। अत उपर्युक्तसूत्रानुसारम्-

५.३० x १० = ५०.३०० =५५.०० = ५५

५.३० x ८ = ४०.२४० =४४.०० = ४४

५.३० x (१०÷३) = ५५÷३ = १८.२० = १८

एवं चरखणानि = ५५।४४।१८ इति।

एतानि चरखण्डान्यनुसृत्य स्वोदयसाधनम्, यथा[१२]-

---

११. ग्रहलाघवं करणम् २.५
१२. ग्रहलाघवं करणम् ४.१

**लङ्केदया विघटिका गजभानि गोङ्क-**
**दस्नास्त्रिपक्षदहनाः क्रमगोत्क्रमस्थाः।**
**हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थै-**
**र्मेषादितो धटत उत्क्रमतस्त्विमे स्युः॥** इति।

अत्र श्लोके पूर्वार्धे लङ्कोदयाः कथितास्तथोत्तरार्धे लङ्कोदयचरखण्डयोः संस्कारेण स्वोदयसाधनं प्रतिपादितम्। यथा–

| **लङ्कोदयाः** | **चरखण्डानि** | **स्वोदयाः** |
|---|---|---|
| मेषः,मीनः, | २७८ – ५५ | = २२३ |
| वृषः,कुम्भः, | २९९ – ४४ | = २५५ |
| मिथुनः,मकरः, | ३२३ – १८ | = ३०५ |
| कर्कटः,धनुः, | ३२३ – १८ | = ३४१ |
| सिंहः,वृश्चिकः, | २९९ – ४४ | = ३४३ |
| कन्या,तुला, | २७८ – ५५ | = ३३३ |

एवं ज्ञातेषु स्वोदयामानेष्वेव लग्नसाधनं सम्भवम्। यतो हि लग्नसाधने सायनसूर्यस्य भुक्तांशं भोग्यांशं वा स्वेदेशीयोदयमानेनैव संगुण्य त्रिंशद्‌भिर्विभज्य सायनसूर्यस्य भुक्तकालज्ञानं भोग्यकालज्ञानं वा विधाय ततश्च सूत्रानुसारं शेषविधिना लग्नज्ञानं क्रियते। यथावलोक्यतां सूर्यसिद्धान्तीयं लग्नानयनम्[१३]–

**गतभोग्यासवः कार्या भास्करादिष्टकालिकात्।**
**स्वोदयासुहता भुक्त-भोग्या भक्ताः खवह्निभिः॥**
**अभीष्टघटिकासुभ्यो भोग्यासून् प्रविशोधयेत्।**
**तद्वत् तदेष्यलग्नासूनेवं यातान् तथोत्क्रमात्॥**
**शेषं च त्रिंशताऽभ्यस्तमशुद्धेन विभाजितम्।**
**भागैर्युक्तं च हीनं च तल्लग्नं क्षितिजे भवेत्॥** इति॥

एवमुपर्युक्तविवेचनया स्पष्टं यद्धोराशास्त्रेऽत्यन्तं महत्त्वपूर्णस्य प्रथमलग्नस्य साधने पलभाया अर्थाच्छायागणितस्य प्रामुख्येनास्त्युपयोग इति॥

---

१३. सूर्यसिद्धान्तः ३.४६–४८

**( २ ) अक्षक्षेत्रेषु च्छायागणितम्–**

पूर्वप्रतिपादितेन "मेषादिगे सायनभागसूर्ये दिनार्धभा या पलभा भवेत्सा।" गणेशदैवज्ञवचनेनानेन स्पष्टमेव यत् सायनमेषादौ सायनतुलादौ वा द्वादशाङ्गुलशङ्कोर्मध्याह्नकालिकी छाया पलभा भवति। सूर्यसिद्धान्तेऽप्युक्तं, यथा[१४]–

**एवं विषुवती छाया स्वदेशे या दिनार्धजा।**
**दक्षिणोत्तररेखायां सा तत्र विषुवत् प्रभा।।** इति।।

अत्र मदुक्तं पद्यं यथा[१५]–

**सायनाजतुलादिस्थे सूर्ये दिनदलोद्भवा।**
**द्वादशाङ्गुलशङ्कोर्या छाया सा पलभा स्मृता।।** इति।।

अस्याश्च पलभाया ग्रहगणिते महानुपयोगः। यतः समग्रेऽपि ग्रहगणितेऽक्षक्षेत्राणामुपयोगः प्रायो भवत्येव तथाऽक्षक्षेत्राणामुपयोगः प्रायो भवत्येव तथाऽक्षक्षेत्रेषु मूलमक्षक्षेत्रं तदेव यत्र पलभा भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, तथा पलकर्णः कर्ण एते त्रयो भुजा भवन्ति। अस्य महत्त्वं प्रतिपादयँल्लिखति भास्करो यत्[१६]–

**भुजोक्षभा कोटिरिनाङ्गुलो ना कर्णोऽक्षकर्णः खलु मूलमेतत्।**
**क्षेत्राणि यान्यक्षभवानि तेषां विद्येव मानार्थयशःसुखानाम्।।** इति।।

अर्थान्मानार्थयशःसुखानां मूलं यथा विद्या भवति तथैव निखिलानामप्यक्षक्षेत्राणां मूलमिदं पलभा-द्वादशाङ्गुलशङ्कु-पलकर्णरूपमक्षक्षेत्रं ज्ञेयम्। अत्र मद्वचनं यथा[१७]–

**पलभा यत्र बाहुः स्यात् कोटिर्ना द्वादशाङ्गुलः।।**
**तयोर्वर्गैक्यमूलञ्च पलकर्णाभिधा श्रुतिः।**
**तज्जात्यत्रिभुजं ह्याद्यमक्षक्षेत्रं प्रकीर्तितम्।।**
**यतोऽक्षांशसमश्चैकः कोणो भवति तत्र वै।**
**शङ्कुपलश्रुतिभ्याञ्च समुत्पन्नस्त्रिबाहुके।।**
**अक्षक्षेत्राणि यानि स्युस्तेषां मूलमिदं तथा।**
**मानार्थसुखसम्प्राप्तौ मूलं विद्या स्मृता यथा।।** इति।।

---

१४. सूर्यसिद्धान्तः ३.१२
१५. गोलपरिभाषा, लेखकः– हंसधरझाः, श्लो. १६८+१/२
१६. सिद्धान्तशिरोमणिः, त्रिप्रश्नाधिकारः, श्लो. १३
१७. गोलपरिभाषा, लेखकः– डा. हंसधरझाः, श्लो. १६९-१७२

अतः स्पष्टं यज्ज्यौतिषशास्त्रे ग्रहगणितस्य प्राथम्यम्, तथा ग्रहगणितेऽक्षक्षेत्राणां, तथा चाक्षक्षेत्रेषु पलभाया अर्थाच्छायागणितस्य महत्त्वमस्तीति। एतच्च प्राच्यानां पलभाजन्यं छायागणितं वैज्ञानिकं, तथ्यपूर्णञ्चेत्यत्र न सन्देहावसरः।

**( ३ ) लम्बांशाक्षांशसाधने छायागणितम्–**

स्वखस्वस्तिकनिरक्षखस्वस्तिकयोः स्वसमस्थानध्रुवस्थानयोर्वाऽन्तरं याम्योत्तरवृत्तेऽक्षांशास्तथा स्वखस्वस्तिकध्रुवस्थानयोरन्तरं लम्बांशा इति विदितमेव विदाम्। अनयोरक्षांशलम्बांशयोः खगोलीयगणिते महानुपयोगो भवतीतिहेतोरनयोः साधनं प्रायो विहितमेव प्राचीनैः सिद्धान्तज्योतिषग्रन्थेषु।

यस्मिञ्जात्यत्रिभुजे एकः कोणोऽक्षांशसमो भवति तत्त्रिभुजमेवाक्षक्षेत्रमुच्यते। अत्र हि अक्षक्षेत्रे एकः कोणोऽक्षांशसमः, अपरः कोणो लम्बांशसमस्तथा तृतीयः कोणो नवत्यंशमितः। तत्र हि अक्षकोणस्य लम्बांशकोणस्य च साधनं विषुवच्छायामाध्यमेनैव कृतं प्राच्यैः। यथा सूर्यसिद्धान्ते[१८]–

**शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते।**
**लम्बाक्षज्ये तयोश्चापे लम्बाक्षौ दक्षिणौ सदा॥** इति॥

अर्थात् त्रिज्या शङ्कुगुणिता पलकर्णभक्ता फलं लम्बज्या भवति तथा त्रिज्या पलभागुणिता पलकर्णभक्ता फलमक्षज्या भवति। तयोर्लम्बाक्षज्ययोश्चापे कृते सति क्रमेण लम्बांशा अक्षांशाश्च भवन्ति।

वस्तुतोऽत्र बीजमिदं यत् पलभा भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, पलकर्णः कर्ण इत्येकमक्षक्षेत्रम्। अक्षज्या भुजः, लम्बज्या कोटिः, त्रिज्या कर्ण इत्यन्यदक्षक्षेत्रम्। अनयोर्जात्यत्रिभुजयोस्त्रयाणां कोणानामेकजातित्वेन साजात्यमतोऽनुपातः। यदि पलकर्णे शङ्कुकोटिस्तदा त्रिज्याकर्णे केति?

$$\text{फलम् लम्बज्या} = \frac{\text{शङ्कुः} \times \text{त्रिज्या}}{\text{पलकर्णः}} \text{।}$$

एवं पलकर्णे पलभा भुजस्तदा त्रिज्याकर्णे क इति?

$$\text{फलमक्षज्या} = \frac{\text{पलभा} \times \text{त्रिज्या}}{\text{पलकर्णः}} \text{।}$$

लम्बज्यायाश्चापं लम्बांशाः, अक्षज्यायाश्चापमक्षांशा इति।

---

१८. सूर्यसिद्धान्तः ३.१३

वस्तुतो विषुवच्छायाद्वारा लम्बांशाक्षांशसाधनमेतत् प्राच्यानां बुद्धिवैलक्षण्यमेव द्योतयति। यतः क्वास्ति नभोमण्डले स्वखस्वस्तिकनिरक्षखस्वस्तिकयोरन्तरं याम्योत्तरवृत्तीयं खण्डमक्षांशाः, तथा च क्वास्ति स्वखस्तिकध्रुवस्थानयोरन्तरं याम्योत्तरवृत्तीयं खण्डं लम्बांशाः, ययोर्ज्ञानं भूस्थितेनैव जनेन द्वादशाङ्गुलशङ्कु–पलभा–पलकर्णसाहाय्येनैव कर्तुं शक्यते। अतो नात्रापि सन्देहावसरो यत् प्राच्यानां छायागणितीयं ज्ञानमिदं प्रशंसनार्हमेवेति।।

**( ४ ) मध्याह्नच्छायाज्ञानान्नतकालज्ञानं ततश्चाक्षांशलम्बांशपलभाज्ञानम्–**

ज्यौतिषशास्त्रे नहि विषुवच्छायावशादेवाक्षांशलम्बांशसाधनं प्रतिपादितं प्राच्यैः, किन्तु यस्मिन् कस्मिन् दिनेऽपि मध्याह्नच्छायावशातसाधनं कर्तुं शक्यत इत्यप्याहुस्ते। यथाऽवलोक्यतां सूर्यसिद्धान्ते[१९]–

**मध्यच्छायाभुजस्तेन गुणिता त्रिभमौर्विका।।**
**स्वकर्णाप्ता धनुर्लिप्ता नतास्ता दक्षिणे भुजे।**
**उत्तराश्चोत्तरे याम्यास्ताः सूर्यक्रान्तिलिप्तिकाः।।**
**दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः।**
**ताभ्योऽक्षज्या च तद्वर्गं प्रोज्झ्य त्रिज्याकृतेः पदम्।।**
**लम्बज्याऽर्कगुणाऽक्षज्या विषुवद्भाऽथ लम्बया।** इति।।

अत्राक्षांशसाधनं विवक्षुरादौ नतांशसाधनं वक्ति। यथा– मध्यन्दिने क्षितिजकेन्द्रे स्थापितस्य द्वादशाङ्गुलशङ्कोर्या छाया स भुजः कल्पितः। तेन भुजेन त्रिज्या गुणिता, शङ्कुच्छायावर्गयोगरूपेण पलकर्णेन भक्ता, तदा यत्फलं तस्य चापकला नतकला भवन्ति। ताश्च नतकला दक्षिणे भुजे सति उत्तरा भवन्ति तथा उत्तरे भुजे सति दक्षिणा भवन्ति।

एवं ज्ञाते नते अक्षांशसाधनं यथा – ता रवेर्नतकलास्तथा दिनार्धकालिकरविक्रान्तिकलाश्च दिग्भेदे युक्ताः कार्याः, दिक्साम्ये चान्तरिताः कार्यास्तदाऽक्षांशा भवन्ति। अत्रेदमुक्तं भवति, यदा रवेर्नतकला दक्षिणाः क्रान्तिश्चोत्तरास्तदा तयोर्योगेनाक्षकलाः, एवं यदा रवेर्नतकला दक्षिणाः क्रान्तिश्च दक्षिणा तदाऽन्तरेणाक्षकला भवन्तीति।

अथ ज्ञातेऽक्षांशे लम्बांशसाधनं यथा – अत्र 'इष्टचापतो ज्यानयनविधिना'[२०] साधिताक्षकलाभ्योऽक्षज्यां प्रसाध्य तद्वर्गं त्रिज्यावर्गाद्विशोध्य यद् भवति, तस्य पदं लम्बज्या ज्ञेया। अत्र लम्बज्यातः लम्बांशज्ञानार्थं 'ज्यातश्चापानयनविधि'[२१] रनुसरणीयः।

एवं ज्ञातायां लम्बज्यायां पलभासाधनं यथा – अक्षज्या द्वादशभिर्गुणिता लम्बज्यया भक्ता तदा

---

१९. सूर्यसिद्धान्तः ३.१४–१६+१/२

२०. "लिप्तास्तत्वयमैर्भक्ता..........स्यात्क्रमज्याविधिरियम्"।। (सूर्यसिद्धान्तः, २.३१–३२)

लब्धिमिता पलभा भवतीति।।

वस्तुत उपर्युक्तं मध्याह्नच्छायातो नतांशज्ञानं, लम्बांशज्ञानमथवा पलभाज्ञानं, सर्वमपि च्छायाणितस्य नूनमेव विलक्षणमुदाहरणं ज्यौतिषशास्त्रे।

**( ५ ) मध्याह्नच्छायातो रविसाधनम्–**

ज्यौतिषे मध्याह्नच्छायावशाद् रविसाधनमपि विलक्षणमेव विज्ञानम्। सुदूरे स्थितस्य भास्करस्य भूस्थितेन जनेन मध्याह्नच्छायावशाद् राश्यादिज्ञानं कथं कर्तुं शक्यत इति प्रतिपादयँल्लिखति सूर्यसिद्धान्ते[२२]–

**स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा।**
**दिग्भेदेऽपक्रमः शेषतस्य ज्या त्रिज्यया हता।।**
**परमापक्रमज्याप्ता चापं मेषादिगो रविः।**
**कर्क्यादौ प्रोज्झ्य चक्रार्धात् तुलादौ भार्धसंयुतात्।।**
**मृगादौ प्रोज्झ्य भगणान्मध्याह्नेऽर्कः स्फुटो भवेत्।** इति।।

अर्थात् स्वदेशे येऽक्षांशास्तथा सूर्यस्य दिनार्धकालिकास्तात्कालिका ये नतांशास्तेषामेकदिक्त्वे सति अन्तरं कार्यम्, तथा अक्षांशानां नतांशानाञ्च दिशोर्भिन्नत्वे सति योगः कार्यस्तदा शेषः सूर्यस्य क्रान्तिर्भवति। तस्य च सूर्यक्रान्तेर्या ज्या सा त्रिज्यया (३४/३८) गुणिता परमक्रान्तिज्यया भक्ता तदा यल्लब्धं तस्य यच्चापं, मेषादिराशित्रयगतो रविश्चेत्तदा तावानेव सूर्यो भवति। यदि रविः कर्कटादिरराशित्रयगतो भवेत्तदा लब्धचापं षड्राशिभ्यो विशोध्य शेषतुल्यो रविर्भवति। तुलादित्रये गतवति सूर्ये षड्राशिसहितात् पूर्वागतचापाद् रविर्भवति। मकरादिराशित्रये स्थिते रवौ लब्धचापं द्वादशराशिभ्यो विशोध्य शेषतुल्यो मध्याह्नकालिकः सूर्यो भवति।।

अत्र मध्याह्नच्छायावशाद् रविज्ञाने किं विज्ञानमिति वासनावलोकनात् स्पष्टत्वं याति। तद्यथा–

मध्याह्ने याम्योत्तरवृत्ते खस्वस्तिकाद् रविर्यावदन्तिरितो भवति ते नतांशा उत्तरा दक्षिणा वा भवन्ति। परमक्षांशास्तु सदा दक्षिणा एव कल्पिता।[२३] अत्र यदि मध्यच्छायातो नतांशा दक्षिणास्तदा तयोरन्तरेण, यदि उत्तरास्तदा तयोर्योगेन सूर्यान्नाडीवृत्तावधि याम्योत्तरवृत्ते सूर्यस्य क्रान्त्यंशा भवन्ति। ततोऽनुपातः – यदि परमक्रान्तिज्यया त्रिज्या लभ्यते

$$\text{तदेष्टक्रान्तिज्यया किमति स्फुटार्कभुजज्या} = \frac{\text{त्रिज्या} \times \text{इष्टक्रान्तिज्या}}{\text{परमक्रान्तिज्या}}$$

२१. "ज्यां प्रोज्झ्य..........संयोज्य धनरुच्यते"।। (सूर्यसिद्धान्तः, २.३३)

२२. सूर्यसिद्धान्तः, ३.१७-१९

२३. सूर्यसिद्धान्तः, ३.१४

एतच्चापं मेषादिराशित्रयगतः स्फुटोऽर्कः स्यादेव। कर्क्यादौ द्वितीयपदत्वादैष्यचापस्य भुजत्वाच्चक्रार्धतः शोधनेन, तुलादौ तृतीयपदत्वाद् गतचापस्य भुजत्वाद् भार्धयोजनेन, मकरादौ चतुर्थपदत्वाद् भगणाद् विशोधनेन सायनमेषादितो राश्यादिकः स्पष्टः सूर्यो भवितुमर्हति। यतो हि सायनमेषादित एव क्रान्तिरुत्पद्यते। एवं समागते सायनसूर्ये अयनांशस्य विशोधनेन निरयणो मेषादिको फलकथनोपयुक्तो रविर्भवतीत्यनुक्तमपि ज्ञेयम्।

वस्तुतो ज्योतिषशास्त्रीयं मध्याह्नच्छायातो रविज्ञानविषयकच्छायागणितमपि नूनमेव प्राच्यानां बुद्धिवैलक्षण्यद्योतकमेवेति।।

**( ६ ) दिग्ज्ञाने छायागणितम् –**

नाविदितं विज्ञैर्यन्निखिलेष्वपि यज्ञादिश्रौतस्मार्तकर्मसु कुण्डमण्डपादीनां निर्माणे पूर्वापरादिदिशां ज्ञानं नितान्तमावश्यकम्भवति। अर्थात् प्राच्यादीनां दिशां ज्ञानं विधाय तदुनसारमेव कुण्डमण्डपादीनां निर्माणं विधेयमिति शास्त्रादेशः। यथोक्तमपि ज्योतिर्निबन्धे[२४]–

**प्रासादे सदनेऽलिन्दे द्वारे कुण्डे विशेषतः।**
**दिङ्मूढे कुलनाशः स्यात्तस्मात्संशोधयेद्दिशः॥** इति।।

एवमेव वास्तुरत्नावल्याम्[२५]–

**प्रथमे सुसमे क्षेत्रे प्राचीं संसाधयेत्सुधीः।**
**सिद्धान्तोक्तप्रकारेण ततो निष्पादयेद् गृहम्॥** इति।।

एवं हि गृहोद्यानजलाशयादिनिर्माणे विश्वभ्रमणे च दिग्ज्ञानं परमावश्यकं भवत्येव, ग्रहाणामाकाशीयस्पष्टस्थितिं विज्ञाय नलिकावेधेन प्रत्यक्षं ग्रहावलोकनार्थमपि दिग्ज्ञानमावश्यकं भवति। इदमेव कारणं यदत्र ज्यौतिषशास्त्रे प्रायो निखिलैरप्याचार्यैर्दिग्ज्ञानं प्रतिपादितमेव स्व-स्वग्रन्थेषु।

एवंविधमहोपयोगिदिग्ज्ञानसाधनेऽपि च्छायागणितं विशेषेण प्रामुख्यं भजते प्रायो निखिलेष्वपि सिद्धान्तग्रन्थेषु। अर्थादत्र ज्यौतिषशास्त्रे दिग्ज्ञानक्रमे द्वादशाङ्गुलशङ्कोश्छायैव मुख्यभूतेतिभावः। यथा सिद्धान्तशिरोमणौ[२६]–

**वृत्तेऽम्भः सुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः क्रमाद्**
**भागं यत्र विशत्यपैति च यतस्तत्रापरैन्द्र्यौ दिशौ।**

---

२४. वास्तुरत्नाकरः, २.१

२५. वास्तुरत्नावली, दिग्ज्ञानाध्यायः, श्लो. २

२६. सिद्धान्तशिरोमणिः, त्रिप्रश्नाधिकारः, श्लो. ८-९

**तत्कालापमजीवयोस्तु विवराद् भाकर्णमित्याहता-**
**ल्लम्बज्याप्तमिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता॥**
**तन्मत्स्यादथ याम्यसौम्यककुभौ सौम्या ध्रुवे वा भवे-**
**देकस्मादपि भाग्रतो भुजमितां कोटीमितां शङ्कुतः।**
**न्यस्येद्यष्मृजुं तथा भुवि यथा यष्ट्यग्रयोः संयुतिः**
**कोटिः प्राच्यपरा भवेदिति कृते बाहुश्च याम्योत्तरा॥** इति॥

अर्थाज्जलवत्समीकृतायां भूमाविष्टप्रमाणं वृत्तं विलिख्य, तस्य केन्द्रे द्वादशाङ्गुलशङ्कुं संस्थाप्य, तस्य शङ्कोश्छाया तस्मिन् वृत्ते यत्र प्रविशति पूर्वाह्ने, अपराह्ने यत्र निर्गच्छति, तत्र पश्चिमपूर्वदिशौ भवतः। यस्मिन् काले छायाप्रवेशो जातः, यस्मिन् काले छायानिर्गमस्तत्कालिकयोः क्रान्तिज्ये साध्ये। तयोरन्तरात्तस्याश्छायायाः कर्णगुणाल्लम्बज्याभक्ताद्यल्लब्धमङ्गुलादिकं फलं तेनैन्द्रीदिगुत्तरतश्चालिता स्फुटा भवतीति यद्युत्तरेऽयने वर्तते। यदि दक्षिणेऽयने तदा दक्षिणतः, एवं स्फुटा प्राची पश्चिमेति। अथ च प्राचीपश्चिमबिन्दुद्वयमध्ये मत्स्येन दक्षिणोत्तरा रेखा कार्या सा रेखा वृत्तकेन्द्रगतत्वाद्वृत्ते यत्र स्थानद्वये लगति ते वास्तव दक्षिणोत्तरदिशौ भवतः। पुनः याम्योत्तरदिशोर्मध्ये मत्स्येन वास्तवा पूर्वपश्चिमा रेखा विधेया। एवं चतुर्दिग्ज्ञानं कृत्वा पूर्ववत् पुनः पूर्वोत्तरदिशोर्मध्ये मत्स्येनैशाननैर्ऋतिविदिशौ साध्ये तथा पूर्वदक्षिणादिशोर्मध्ये मत्स्येनाग्निवायुविदिशौ च साध्ये। एवं स्फुटा अष्टौ दिशो भवन्ति।

एवं हि पूर्वाचार्यैः प्रायो निखिलेष्वपि सिद्धान्तज्यौतिषग्रन्थेषु[२७] च्छायाद्वारा दिग्ज्ञानसाधनं प्रतिपादितमेव। एतेन स्पष्टं वक्तुं शक्यते यदार्याणां दिग्ज्ञानजन्यं छायागणितीयं ज्ञानमपि विकसितमासीदिति॥

**(७) ग्रहणे छायागणितम्–**

अस्मिन् खलु जगति को न परिचितोऽस्ति सूर्यग्रहणेन चन्द्रग्रहणेन वा? मन्ये सर्व एव परिचिता एव। पूर्वाभिमुखं व्रजन्तश्चन्द्रो यदा पूर्णान्ते भूभायां प्रविशति तदा चन्द्रग्रहणं जायते तथा स एव चन्द्रो यदाऽमान्ते सूर्यमाच्छादयति तदा सूर्यग्रहणं जायते। अर्थाच्चन्द्रग्रहणस्य भूभैव (पृथिव्याश्छायैव) कारणभूता।

अतोऽत्रापि स्पष्टं यच्चन्द्रग्रहणगणितसाधनेऽपि च्छायागणितमेव मुख्यमिति। तत्र चन्द्रग्रहणे भूभासाधनम्, ग्रासानयनम्, स्थितिविमर्दार्धज्ञानम्, स्पर्शमोक्षमध्यग्रहणकालज्ञानम्, सर्वमपि च्छायागणित-मूलकमेव। तथा चैतत्सर्वमपि च्छायाधारितं ग्रासादिकं सत्यमपि घटते, ग्रहणस्य स्पर्शमोक्षादीनां प्रत्यक्षदर्शनात्। तत्रावलोकनीयाः केचनांशाः। यथा भूभासाधनम् सिद्धान्तशिरोमणौ[२८]–

२७. सूर्यसिद्धान्तः, ३.१-४, ग्रहलाघवम्, ४.२१, शिष्यधीवृद्धिदम्, त्रिप्रश्नाधिकारः, श्लो. १, इत्यादि।

२८. सिद्धान्तशिरोमणिः, चन्द्रग्रहणाधिकारः, श्लो. ६

**भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्।**
**भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे।।** इति।।

अर्थान्द्रिविबिम्बं भूव्यासेन हीनं कृत्वा इन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत्। फलेन भूव्यासो वर्जितश्चन्द्रकक्षायां भूभाव्यासो भवति। अस्यामेव भूभायां प्रविष्टे चन्द्रे चन्द्रग्रहणं जायते। उक्तमपि सूर्यसिद्धान्ते[२९]–

**छादको भास्करस्येन्दुरधःस्थो घनवद् भवेत्।**
**भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ।।** इति।।

यदा खलु भूभातुल्यो चन्द्रपातो भवति तदा चन्द्रग्रहणमथवा भूभातः कियद्भिरंशैरूनोऽधिको वा यदा चन्द्रपातो भवति तदा ग्रहणम् सम्भाव्यते। यथा तत्रैव सूर्यसिद्धान्ते[३०]–

**भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा।**
**शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके।।** इति।।

अथ ग्रासानयनम् सूर्यसिद्धान्ते[३१]–

**तात्कालिकेन्दुविक्षेपं छाद्यच्छादकामनयोः।**
**योगार्धात् प्रोज्झ्य यच्छेषं तावच्छन्नं तदुच्यते।।**
**ग्राह्यमानाधिके तस्मिन् सकलं न्यूनमन्यथा।**
**योगार्धादधिके न स्याद् विक्षेपे ग्राससम्भवः।।** इति।।

अर्थात् पर्वघट्यन्तकालिकं चन्द्रशरं, चन्द्रग्रहणे चन्द्रभूभयोः सूर्यग्रहणे सूर्यचन्द्रबिम्बयोः योगार्धात् विशोध्य यच्छेषं तद् ग्रासमानं भवति। तत्र ग्राह्यमानाधिके सति अर्थाच्चन्द्रग्रहणे चन्द्रबिम्बाधिके सति तथा सूर्यग्रहणे सूर्यबिम्बाधिके सति सर्वग्रहणं भवति, अन्यथा (ग्राह्यबिम्बतोऽल्पे छन्ने सति) अल्पग्रहणं जायते।।

एवमुपर्युक्तग्रहगणविषयकविवेचनयाऽपि स्पष्टमेव यत् प्राच्यानां ग्रहणविषयकं छायागणितमपि नितरां वैज्ञानिकमेव। यतो हि भूस्थितेनैव जनेन सुदूरस्थितस्याकाशीयग्रहणस्य स्पर्शमोक्षग्रासादिज्ञानं नहि सामान्यं विज्ञानमिति।

एवं नात्र सन्देहो यत् प्राच्यानां ज्यौतिषशास्त्रीयं छायागणितजन्यं ज्ञानं विलक्षणं प्रशंसनार्हमनुसन्धेयञ्चेति दिक्।।

२९. सूर्यसिद्धान्तः, ४.९
३०. सूर्यसिद्धान्तः, ४.६
३१. सूर्यसिद्धान्तः, ४.१०-११

# अर्थ एव प्रधान इति कौटिल्यः

**डॉ. हेतरामकछवाहः**

कोशशब्दः शकारन्तः षकारान्तश्च पुंलिङ्गे नपुंसकलिङ्गे च प्रयुज्यते। स च 'कोषोऽस्त्री कुड्मले पात्रे पेश्यां शब्दादिसङ्ग्रहे। जातिकोशेऽर्थसंघाते दिव्ये खड्गापिधानके'[1] इति मेदिनी-कोशप्रमाण्येन अमरकोशे उदधृतम् कोशशब्दव्युत्पत्तिश्च-'कुष्यति निष्क्रामत्यस्मात्स्वयमेव इति कोशः। 'कुष्' धातोः अकर्तरि इति विवक्षायाम् 'अकर्त्तरि च'[2] सूत्रेण कोषशब्दः तालव्यशकारे मूर्धन्यषकारे च द्विधा प्रयुज्यते। एवं पुष्पकलिकासु खड्गस्य 'म्यान' इत्याख्ये पिधाने स्वकोषे राजकोशे वा दिव्यशपथभेदे च सर्वत्र विविधार्थेषु विवृतो दृश्यते।

किञ्च अपरत्र कोशशब्दः हिरण्ये रजते उभयोर्निर्मितायां मुद्रायाञ्च प्रयोगविशेषे दृश्यते। अत्र हिरण्यमयशब्देन अमुद्रात्मके सौवर्णे रजते वा पिण्डेऽपि व्यवहारो दृश्यते। तालव्यस्थकोशशब्दे 'कुश = संश्लेषणे' इति धातोः कुश्यन्ते संश्लेष्यते धनम् (करः) अनेन इति कोशः इति व्युत्पत्ति एवं कुश-कुषशब्दयोः धातुपाठे पृथक्-पृथक्धातुनिर्देशनेन राजकीयकरसंग्रहणे मन्ये तालव्यशकारान्तकोश एव शब्दो ग्रहीतुं शक्यते महर्षिपाणिनिधातुपाठनिर्देशात्।

अपरञ्च मूर्धन्यषकारान्तकोषशब्दस्य कुड्मले खड्गपिधाने अर्थौघसङ्ग्रहेऽपि मेदिनीकोष-अमरकोषादौ च प्रयोगे सत्यपि क्र्यादिधातुपाठे 'कुष निष्कर्षे' इति पाठाद् विश्वकोषप्रमाणेन[3] शपथे 'विश्वक्सेनोऽग्रेषः कोषविषादौ च' इत्यत्र कुष्धातोः षकारस्य शकारस्य वा ऊष्मवर्णत्वेन ऋषे आर्षदृष्टौ षकारस्य शकारस्य अक्षरध्वनिभेदेन कोषेऽर्थे सम्पन्नेऽपि विषादावपि कोषशब्दस्य भावोऽभिगम्यते। अतः केषाञ्चिदाचार्याणां मतेन कोषशब्दस्य विषार्थोऽपि ग्रहीतुं शक्यते। एवं बहवर्थकः कोशशब्द तत्र तत्र कोषग्रन्थेषु शास्त्रेषु च प्रयुक्तो दरीदृश्यते।

किञ्च सर्वग्राहके वाचस्पत्यं कोषे कुशशब्दः आधारादौ, कृताकृतयोः, हेमरूप्योः कुड्मले, खड्गपिधाने, समूहे दिव्यभेदे, मूर्धन्यकोषशब्दः अभिधानरूपे शब्दपर्यायव्यापकग्रन्थे धनाद्यागारे, पानपात्रे

१. मेदिनीकोशः १६६/१०

२. अष्टाध्यायी ३/३/१९

३. विश्वकोषकः १७१/८

चषके, हेमकोषप्रमाणेन शिम्बायां पनसादिमध्यस्थे (कोवा) इत्यर्थे धरणीकोषप्रमाणेन पदार्थे यथा-'नेत्रकोषः क्षीरस्वमीवचनेन', धनागारे 'निःशेषविश्राणत कोषजातम्' इति प्रयोगे यदा राजा रघुः द्वादशवर्षे विश्वजितयज्ञे स्वधनागारस्य स्वप्रतिज्ञानुसारेण समग्रस्य कोशस्य दाने कृते सति सर्वथा रिक्तहस्तः तिष्ठति, तदैव उपात्तविद्यः गुरुदक्षिणार्थी वरतन्तुशिष्यः कौत्सः राज्ञो रघोः समीपे आगत इति रघुवंशमहाकाव्यस्य पञ्चमसर्गे इत्थं महाकविकालिदासेन वर्णितम्-

**तमध्वरे विश्वजितिक्षितीशे निःशेषविश्राणित कोषजाते।**
**उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः।।**[१]

एवं कुड्मले विकसमानपुष्पकलिकायां प्रयुक्तः कोशशब्दः महाकविकालिदासेनैव 'मामक्षिणोद् यत्र विभिन्नकोशैः', 'भिन्नादिगौरिकतटा इव दन्तकोशाः' इत्युभयत्र कालिदासेन तालव्यशकारस्य यः प्रयोगः कृतः स अरुणदन्तपङ्क्तेरर्थे प्रयुक्तः। अतः कालिदासप्रयोगप्रामाण्याद् दन्तकोशेऽपि कोशशब्दः प्रयुक्तो दृश्यते। किञ्च देवीभागवतस्थमन्त्रयोगस्य दुर्गासप्तशत्यां स्तवे पञ्चमाध्याये श्लोकः:-

**'शरीरकोशाद्यत्तस्याः पार्वत्या निःसृताम्बिका।**
**कौशिकीति समाख्याता ततो लोकेषु गीयते।।**[२]

इत्यत्र कोशशब्दः शरीरकोशेऽपि प्रयुक्तः। अतः कोशः कोषश्च इत्युभयशब्दौ तत्तच्छात्रेषु विविधात्रेषु विविधार्थेषु प्रयुक्तो दरीदृश्यते। एवमेव 'पङ्कजकोषः' रघुवंशे एव प्रयुक्तः। सुश्रुतसंहितायाञ्च 'कोशमङ्गुलीपर्वसु विदध्यात्' इति अङ्गुलीपर्वस्वपि कोशशब्दो व्यवहृतः। श्रीमद्भागवतमहापुराणवचनेन 'योवा व्ययं द्वीपः कुवलयकमलकोषाभ्यन्तरकोशः'[३] इत्यत्र कुवलयकमलकोषे पुनः कोश इत्युभयशकारषकारप्रयोगो जातः। एवं कोशशब्दो वह्वर्थे प्रयुक्तस्सन् शास्त्रसम्मतो दृश्यते। एष्वर्थेष्वेव राजशास्त्रे राजकोशार्थे कोश-कोष इत्युभौ शब्दौ शास्त्रकारसम्मतौ। विशेषतश्च राजकीयकोशे राजकोशे राष्ट्रियकोशे वा तालव्यशकारार्थः प्रयोगः शास्त्रकारैः नेष्टः। अतो राजकीयकोषे राजकोषे वा सर्वथा मूर्धन्यषकारार्थक एव प्रयोक्तव्यः, न तालाव्यशकारार्थक इति विवेकः।

कोशस्य यन्महत्त्वं प्राचीनकाले आसीत्, तदद्यापि वर्तते। कोशं विना किमपि राज्यं नैव प्रभवति प्रगतिं कर्तुम्। राज्यस्यास्तित्वं विकासश्च कोशे एव निर्भरो भवति। आचार्यकौटिल्यस्य मतमस्ति यद् राज्यस्य सर्वेषां कार्याणामारम्भाः कोशाधारिता भवन्ति। अत एव राज्ञा सर्वप्रथमं कोषव्यवस्था कार्या।[४] धर्मपूर्वकमेव प्रजाभ्यो धनसंग्रहः कर्त्तव्यः। पर्याप्तरूपेण राष्ट्रियकोशे धनसंग्रहो

१. रघुवंशमहाकाव्यम् ५/२
२. दुर्गासप्तशती ५/८७
३. श्रीमद्भागवतमहापुराणम् ५/१६/६
४. "कोषपूर्वाः सर्वारम्भाः। तस्मात् पूर्वं कोषमवेक्षेत। प्रचारसमृद्धिश्चरित्रानुग्रहश्चोरग्रहो युक्तप्रतिषेधः सस्यसम्पत् पण्यवाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्यापायनमिति कोशवृद्धिः।" - कौटिलीयार्थशास्त्रम् २/८

विधातव्यः, येन विपत्तिकालेष्वपि दीर्घकालं यावद् आर्थिकदृष्ट्या राज्यकार्याणि निर्बाधं चलेयुः। लोके धर्मार्थकामस्वरूपस्य त्रिवर्गस्य मूलं कोश एवास्ति।[१] राज्यव्यवस्था सैनिक-व्यवस्थादयश्च सर्वाः कोशाधारिता भवन्ति। कोशाभावे सैनिकाः शत्रोरधीना भवन्युत स्वस्वामिनमेव घ्नन्ति।

अर्थशास्त्रे अर्थप्रतिपादनप्रसङ्गे कथितमस्ति यत् अर्थ एव प्रधान इति कौटिल्यः।[२] आचार्यकौटिल्यः कथयति यत् सङ्कटकाले शान्तिकाले चोभयोः कालयोः राज्यस्य प्रजानाञ्च लाभार्थ कोशप्रयोगः करणीयः। इदमत्रावधेयं यत् स च कोशो धर्मार्जितः स्यात्, सः पूर्ववर्तिभिः राजभिः प्राप्तः स्यादुत राज्ञा स्वयमधिगतः स्यात्। कोशः प्रधानतया सुवर्णरजतादिमुद्राभिर्विविधवर्णयुतैर्गुरूतमैः रत्नैश्च पूर्णो भवितव्यः। तन्मात्रा चात्यधिकरूपेण भवेत्, येन सुदीर्घकालपर्यनतं वाह्याक्रमणानां दुर्भिक्षादीनामन्यासामापदञ्च प्रतीकारं कर्तुं शक्येत।[३] आचार्यकामन्दकानुसारं वार्ताविद्याभ्यन्तरे कृषिकार्यं, वाणिज्यं, पशुपालनञ्चायांति। एतान्येव कोशवृद्धिसाधनानि सन्ति। राजा न्यायपूर्वकं धर्मपूर्वकञ्च कोशार्जनं कृत्वा तद्रक्षणपुरस्सरं तद्वृद्ध्यर्थं तस्य सदुपयोगार्थञ्च यत्नं कुर्यात्।[४] कोशवैशिष्ट्यं प्रतिपादयताऽऽचार्यकामन्दकेनोक्तमस्ति यद् राज्यस्य स्वातन्त्र्यस्य दायित्वं मूलरूपेण राज्ञो भवति, किन्तु राज्ञः रक्षा कोशद्वारैव भवति, अर्थात् सः कोशबृद्ध्या यावत्सम्पन्नो भविष्यति तावत्स्वराज्यस्य प्रजानाञ्च रक्षणं कर्तुं प्रभवति, यतो हि राज्यस्य सर्वाण्यन्यान्यङ्गानि कोश एवाश्रितानि भवन्ति। यदि राज्ये कोशस्य मूलवार्तायाः कृषिवाणिज्यपशुपालनानां विनाशो भवति चेत् कोशं विना किमपि राज्यं नहि जीवितुं शक्नोति। एवं विधं कोशविहीनं राज्यं श्वसनक्रियां कुर्वदपि मृतवत् भवति, यतोहि कोश एव राज्यस्य सर्वाधारभूतोऽस्ति।[५]

आचार्यभीष्मस्य कथनमस्ति यद् राजानो निरन्तरप्रयत्नपूर्वकं स्वकोशरक्षां कुर्युः। यतोहि कोश एव राज्यस्य राज्ञश्च मूलमस्ति। कोश एव तयोर्विकासं करोति।[६] राज्यस्यान्नभण्डारं सर्वदा परिपूर्णं स्थापनीयम्।[७] यद्धनं राज्यस्य सुरक्षाव्यवस्थाकार्येभ्योऽवशिष्टं भवेत्तदेव धर्मकर्मसु उपभोगेषु वा

---

१. 'अर्थमूलौ हि धर्मकामाविति।' —कौटिलीयार्थशास्त्रम् १/६

२. कौटिलीयथार्थशास्त्रम् १/६

३. "धर्माधिगतः पूर्वैः स्वयं वा हेमरूप्यप्रायश्चित्रस्थूलरत्नहिरण्यो दीर्घामप्यापदमनायति सहेतेमति कोशसम्पत्।।"

४. "न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्।।" —कामन्दकीयनीतिसारः- १/२०

५. आयत्तं रक्षणं राज्ञि वार्ता रक्षणमाश्रिता।
वार्ताच्छेदे हि लोकोऽयं श्वसन्नपि न जीवति।। —कामन्दकीयनीतिसारः १/१२

६. कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः।
कोशमूला हि राजानः कोशो वृद्धिकरो भवेत्॥ म॰ शा॰ प॰ ११९/१६

७. कोष्ठागारं च ते नित्यं स्फीतैर्धान्यैः सुसंवृतम्।
सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव॥ म॰ शा॰ प॰ ११९/१७

नियोक्तव्यम्।[१] धारणाशक्तिः चातुर्यं संयमः बुद्धिः शरीरं धैर्यं शौर्यं तथा च देशकालपरिस्थित्यनुसारं व्यवहरणम् एतानि अष्टकोशवर्धनसाधनानि सन्ति, अर्थाद् धनरूपाग्निप्रज्ज्वलनायेन्धनस्वरूपाणि सन्ति। स्वल्पेव्यध्नौ यदि वृतसिञ्चनं क्रियते तदा सः झटिति महान् भवति। एकस्मात् लघुबीजात् सहस्रबीजानि उत्पद्यन्ते। अतोऽल्पस्यापि धनस्य दुरुपयोगोऽनादरश्च न करणीयः।[२] दुष्टजाद्धनमपहृत्य तस्य सदुपयोगं कुर्यात्।[३]

महाभारतस्य शान्तिपर्वण्युक्तं यदनावृष्टौ जलसङ्कटे च यथा जनो निर्जलस्थानं खनित्वा जलं निस्सारयति, तथा सङ्कटकाले राज्यस्य प्रजायाश्च कल्याणाय निर्धनजनेभ्योऽपि यथासाध्यं धनं गृहीत्वा राजा स्वकोशं संवर्द्धयेत्। सुसमये प्राप्ते तद्धनेन प्रजा अनुग्रहणीयाः। पूर्वराजैरप्यापत्तिकाले इत्थमाचरणं विधाय संकटाद्राज्यं प्रजा व समुद्धारितम्।[४] राज्यरक्षामूलं सेना कोशश्च विद्यते, तत्रापि कोश एव सेनामूलम्।[५] सन्दर्भेऽस्मिन् भारतभावदीपाख्यटीकाकारेणापि महाभारते कथितम्–

"राज्ञो मूलं दीर्घकारणं कोशो बलं च तत्रापि कोशो बलस्य मूलं तद्बलं धर्माणां मूलं धर्मश्च प्रजानां मूलम्। अतः सर्वस्य मूलभूतं कोशं वर्धयेत्।"[६]

अतः आपत्तिकाले प्रजां सम्पीड्यापि राजा दोषभाङ् न भवति।[७] यतो हि सङ्कटकाले आर्थिकदृष्ट्या प्रजापीडनमर्थसंग्रहरूपप्रयोजनसाधकतया अर्थकारकं जायते।[८] यथा याज्ञे कर्मण्यकरणीयमपि

---

१. यद्धि गुप्तावशिष्टं स्यात् तद्धितं धर्मकामयोः।
संञ्चयान्न विसर्गी स्याद् राजा शास्त्रविदात्मवान्॥ म० शा० प० १२०/३५

२. धृतिर्दाक्ष्यं संयमो बुद्धिरात्मा, धैर्यं शौर्यं देशकालाप्रमादः।
अल्पस्य वा बहो वा विवृद्धौ, धनस्यैतान्यष्ट समिन्धनानि॥
अग्निः स्तोको वर्धतेऽप्याज्यसिक्तो, बीजं चैकं रोहसहस्रमेति।
आयव्ययौ विपुलौ संनिशाम्य, तस्मादल्पं नावमन्येत वित्तम्॥ म० शा० प० १२०/३७.३८

३. असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति।
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मवदेव सः।। म० शा० प०– १३६/७

४. कोशं च जनयेद्राजा निर्जलेभ्यो यथा जलम्।
कालं प्राप्यानुगृह्णीयादेष धर्मः सनातनः॥
उपायधर्मं प्राप्येमं पूर्वैराचरितं जनैः। म० शा० प०– १३०/१३

५. राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम्।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः॥ म० शा० प०– १३०/३५

६. म० शा० प०– १३०/३५, इत्यत्र भारतभावदीपाख्यटीकायाम्।

७. नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम्।
तदर्थं पीडयित्वा च दोषं प्राप्तुं न सोऽर्हति॥ म० शा० प० १३०/३६

८. अर्थार्थमन्यद् भवति विपरीतमथापरम्।
अनर्थार्थमथाप्यन्यत् तत् सर्वं ह्यर्थकारणम्॥
एवं बुद्ध्या सम्प्रपश्येन्मेधावी कार्यनिश्चयम्। म० शा० प० १३०/३८

किञ्चित्कर्मानुष्ठीयते, तत्कर्मसदोषं न मन्यते, तथैवापत्तौ प्रजापीडनेन राजा दोषयुक्तो न भवति।[१] विपत्तिकाले प्रजायाः राज्यस्य च रक्षणाय कोशसंग्रहरूपकार्यं ये बाधन्ते, राजा तेभ्यो मृत्युदण्डमपि दातुं शक्नोति,[२] यतोहि राज्यप्रजासंरक्षणातिरिक्तः कश्चनाऽपरो राजधर्मो न विद्यते।[३] यस्य राज्ञः पार्श्वे पर्याप्तकोशो भवति, सः सर्वस्मादपि सङ्कटात् पारमधिगच्छति।[४] कोशेनैव राज्यमूलं सुदृढ़ं जायते।[५] निर्बलेन राज्ञा कोशो न प्राप्यते। कोशहीनस्य पार्श्वे सैन्यबलं स्थातुं न शक्नोति। अतः कोश एव राजस्य सर्वस्वभूतं तत्त्वम्।[६] कोशे नष्टे जाते सति राजबलं विनश्यति।[७] यस्य राज्ञः पार्श्वे कोशस्य धनस्य वा अभावो भवति, साधारणजनैरपि स उपेक्ष्यते।[८]

कोशस्य महत्वं प्रतिपादयता महर्षिणा व्यासेन महाभारते उक्तं यदप्राप्यप्रापणम्, प्राप्तवस्तुसंरक्षणम्, तद्सम्बर्द्धनम्, सम्बर्द्धितं वस्तु यथायोग्यं सुपात्रेभ्यो यथाविधिदानं धनस्य सदुपयोगो भवति।[९] धर्माय धनत्यागो हि द्वितीयोपयोगः, कामभोगार्थं तद्व्ययः तृतीयः, सङ्कटं निवारयितुं तद्व्ययः चतुर्थः सदुपयोगः।[१०] धनेन मनुष्य इहलोके परलोके च विजयते, सत्यं धर्मञ्च सम्पादयतीति।[११] कोशसंचयेनैव

---

१. अकार्यमपि यज्ञार्थ क्रियते यज्ञकर्मसु।
एतस्मात् कारणाद् राजा न दोषं प्राप्तुमर्हति॥ म॰ शा॰ प॰– १३०/३७

२. एवं कोशस्य महतो ये नराः परिपन्थिनः।
तान् हत्वा न पश्यामि सिद्धिमत्र परं तप॥ म॰ शा॰ प॰– १३०/४२

३. न च राज्यसमो धर्मः कश्चिदस्ति परं तप।
शब्दः संशब्दितो राज्ञामापदर्थमातोऽन्यथा॥ म॰ शा॰ प॰– १३०/४७

४. अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत्।
सर्वं धनवता प्राप्यं सर्वं तरति कोशवान्॥ म॰ शा॰ प॰– १३०/४९

५. स्वराष्ट्राद् परराष्ट्राच्च कोशं संजनयेन्नृपः।
कोशाद्धि धर्मः कौन्तेय राज्यमूलं च वर्धते॥ म॰ शा॰ प॰– १३३/१

६. अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम्।
अबलस्य कुतो राज्यमराज्ञः श्रीर्भवेत् कुतः।। म॰ शा॰ प॰– १३३/४

७. अशङ्कमानो वचनमनसूयुरिदं शृणु।
राज्ञः कोशक्षयादेव जायते बलसंक्षयः॥ म॰ शा॰ प॰– १३३/४

८. हीनकोशं हि राजानमवानन्ति मानवाः।
न चास्याल्पेन तुष्यन्ति कार्यमप्युत्सहन्ति च॥ म॰ शा॰ प॰– १३३/६

९. अलब्धलाभो लब्धस्य तथैव च विवर्धनम्।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्ततः॥ म॰ शा॰ प॰– ५९/५७

१०. विसर्गोऽर्थस्य धर्मार्थं कामहैतुकमुच्यते।
चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम्॥ म॰ शा॰ प॰– ५९/५८

११. धनेन जयते लोकावुभौ परमिमं तथा।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा॥ म॰ शा॰ प॰– १३०/४३

धर्मकामलोकपरलोकेषु सिद्धिमधिगच्छति। प्रायः धर्मोपायेनैव राज्ञा धनप्राप्तिकामना करणीया।[१] राजा कोशसंग्रहं कुर्यात्, कोशं संग्रह्य सादरं तं रक्षेत्, तद्रक्षाञ्च विधाय यथानुरूपं सम्वर्द्धयेत्। राज्ञोऽयमेव सदाकोशसम्बन्धिधर्मः।[२]

एवं हि भारतीयराजशास्त्राचार्यैः कोशं राज्यस्य महत्त्वपूर्णमङ्गं मत्वा अनेकोपायैः कोशसंग्रहसम्बन्धिविचारः प्रतिपादितः। कोशस्य सङ्ग्रहः अर्थे समायाति। आचार्यचाणक्येन स्वकीयस्य ग्रन्थस्य नाम अर्थशास्त्रम् इति विहितम्। तत्र अर्थशब्दो धर्मार्थकामप्रधाने त्रिवर्गे समायाति। अत्र अर्थशब्दार्थः चल-अचलसम्पत्तिः इति वर्तते। त्रिवर्गे यः अर्थशब्दः तत्र अर्थ एव प्रधान इति कौटिल्यमतम्। अत्र धर्मादिषु प्राधान्यनिर्णयं कुर्वता चाणक्येन इत्थमुक्तम्-"धर्मार्थाविरोधेन कामं सेवेत, न निस्सुखः स्यात्। समं वा त्रिवर्गमन्योन्यानुबन्धम्। एको ह्यत्यासेवितो धर्मार्थकामानाम् आत्मानमितरौ च पीडयति।[३] अर्थ एव प्रधान इति कौटिल्यः-अर्थमूलौ हि धर्मकामाविति।'

अस्यार्थः श्रीमूलायां त्रिधा कृतः-कामं धर्मार्थयोः अविरोधेन सेवेत इति एकः पक्षः। परस्परपूरकतया सेवेत इति द्वितीयः पक्षः। यतः एकः पुरुषार्थः आचरितः आत्मानं पितरौ च बाधयति। अर्थ एव प्रधानः इति कौटिल्यमतम् यतः विना अर्थ न धर्मानुष्ठानं न वा कामोपभोगः। तदेवाह-'धर्मार्थाविरोधेन धर्मार्थयोरबाधेन कामं तृतीयपुरुषार्थम्। वेति पक्षान्तरे। तच्च अन्योन्यानुबन्धं त्रिवर्ग समं सेवेतेति। परस्परसंसृष्टान् धर्मार्थकामास्तुल्यमात्रया सेवेतेरुत्यर्थः। सममसेवने को दोषस्तत्राह धर्मार्थकामानां मध्ये एकः अन्यतमः अत्यासेवितः अतिमात्रं व्यसनितया सेवितः सन् इतरौ अर्थकामौ धर्मार्थौ वा पीडयति हि। धर्मादीनां समप्राधान्यमरोचयमानः कौटिल्य आह- अर्थ एव प्रधान इति कौटिल्यः। एवकारेण धर्मकामयोरप्राधान्ययुक्तम्। तत्र हेतुरुच्यते-अर्थमूलौ हि धर्माकामाविति। अर्थमूलौ = अर्थसाध्यौ।

अत्र जयमङ्गला-"स्वदारेष्वपि कामसेवायां विधिमाह-धर्मार्थाविरोधेनेति। त्रतावुपेयात् सर्वत्र वा प्रतिषेधवर्जमिति धर्माविरोधः। कामौपयिकवस्तुमात्रसम्पादनादर्थाविरोधः। यद्येवन्धर्मार्थाविवे सेव्यौ प्रधानत्वात्, न काम इत्यत्राह-न निस्सुखः स्यादिति। अवश्यमविरोधेन सेव्यम्। तस्य धर्मार्थयोः फलभूतत्वात्। पितृक्रियाङ्गत्वाद्धर्मार्थम्, अन्वयादिना चार्थार्थम्। तस्मादविरोधेन कालं विभज्य मात्रया सेव्यते। तथा चाह गौतमः-

---

१. कोशेन धर्मः कामश्च परलोकस्तथा ह्ययम्।
तं च धर्मेण लिप्सेत नाधर्मेण कदाचन॥

२. तस्मात् संजनयेत् कोशं सत्कृत्य परिपालयेत्।
परिपाल्यानुतनुयादेष धर्मः सनातनः॥ म॰ शा॰ प॰- १३३/२

३. कौटिलीयथार्थशास्त्रम् १/६

"न पूर्वाह्नमध्यान्दिनापराह्णनफलान् कुर्यात्। यथाशक्तिधर्मार्थकामेभ्यः।"[१]

समं वा त्रिवर्गं सेवते। नैकमतिशयेनेत्यर्थः। न केवलं समम्, अन्योन्यानुबन्धम्। यस्मिन् सेव्यमानेऽन्योप्यनुबध्यते। तत्र धर्मोऽर्थेन कामेनोभयेन वेति अर्थकामानुबन्धः। अर्थो धर्मेण कामेनोभयेन वेति धर्मकामानबन्धः। कामो धर्मेणार्थेन भयेन वेति धर्मार्थानुबन्ध इति। एकस्यातिसेवायां दोषमाह–एको हीत्यादि। धर्मादीनां मध्ये एकोऽत्यन्तसेवितः आत्मानमितरौ च पीडयति। तद्यथा– अतिदानेन धर्मोऽर्थं पीडयित्वा धर्मान्तरं च पीडयति। तपश्चात्यन्तं सेवितं? कामं बाधित्वा शरीरक्षयाद् धर्मार्थौ बाधते। अर्थोऽपि तादात्विकोऽस्ति य उपादीयमानः ऐलस्येव धर्मकामौ बाधित्वार्थमपि बाधते। कामोऽत्यासेव्यमानः शरीरक्षयादात्मानं पीडयति। असमुत्थानादर्थम्। अर्थाभावद्धर्मम्। तस्मात् समं सेवेत।

तत्रापि शरीरान्तरोपात्तधर्ममूलत्वेऽप्यर्थकामयोर्वर्तमानव्यापारापेक्षत्वादुपदेशमाह– अर्थमूलाविति। यस्माद् राज्ञो धर्मकामावर्थमूलौ, अर्थमुपजृम्भयोर्द्वावप्यविरोधेन भवतः। तस्मादन्योन्यानुबन्धित्वेन अर्थस्य विशेषः। इत्थं महानयज्ञेन चाणक्येन राजनीतिशास्त्रमिति स्थाने अर्थशास्त्रमिति पदेन व्यहृतम्। अतो राजनीतेर्भावः अर्थशास्त्रमपि अत्र राजशास्त्रार्थे अर्थपदं चतुर्विधपुरुषार्थेषु अन्यतमपुरुषार्थपरकमस्ति यथा विद्याप्राकर्षे शुक्तिरियम्–

**विद्या ददाति विनयं विनयाद् याति पात्रम्।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततस्सुखम्।।** इति।

अत्र विनयादीनां कारणं विद्या इति कथितम्, परं विद्यया पात्रत्वे सति धनम् (अर्थः) प्राप्तिर्भवति।

आचार्यचयाणक्यप्रभृतयः सर्वे प्राक्तना राजशास्त्रवेत्तारः कथितवन्तो यद् राज्यसञ्चालनाय राज्ये अर्थस्य (कोषस्य) भवति किलावश्यकता। अर्थसमृद्धौ राष्ट्रे युक्तविनमयेन राज्यं पूर्णगौरवमाधत्ते। एतेनैव वाल्मीकीयरामायणे महर्षिवाल्मीकिना प्रतिपादितम् यद् यदा हि रामो वनवासान्निवृत्तः पुनरयोध्यायामागतस्तदा महात्मा भरतः पित्रा दशरथेन यावद्वैभवैः यावती च मही ततस्चतुर्गुणं वृद्धिं विधाय रामाय राज्यं ददौ–

**यावदावर्तते चक्रं यावती च वसुन्धरा।**
**तावत् त्वमिह लोकस्य स्वामित्वमनुवर्तय।।**[२]

अत्र श्लोके दशरथेन शासितस्य राष्ट्रस्य चतुर्गुणं वृद्धिं विधाय चतुर्गुणितं कोषं वर्धयित्वा भरतेन रामाय राज्यं प्रदत्तम्। अत्र प्रकरणे वाल्मीकीयटीकाकारा भरतेन वर्धितस्य चतुर्गुणकोषस्य

---

१. धर्मसूत्रम् ९/४८

२. वाल्मीकीयरामायणम् १२८/११

बहुमाहात्म्यं वर्णयनित। एतेन प्रतीयते यद्राज्ञां कृते कोषस्य महन्महत्वं वरीवर्ति। व्यवहारेऽपि अर्थरहितं किमपि कार्यं साधयितुं न शक्यते। तदा का कथा राज्यसञ्चालनस्य। एतत् सर्वं विमृश्य महानीतिकारेण चाणक्येन राजशास्त्रस्याभिधानम् अर्थशास्त्रमिति विहितम्। तथा हि 'अर्थ एव प्रधान:' इति। इत्थं पूर्वं विद्याप्राशस्त्ये विद्या ददाति विनयम् इत्यादि वचनमुद्धृतम्। आचार्यचाणक्य: स्वग्रन्थे धर्मादिषु प्राधान्यनिर्णय इति प्रकरणे वचनमेतत् प्रतिपादितं यद् 'अर्थ एव प्रधान:' इति। एतेन सुतरां सिद्धयति यद्राज्ञा प्रजाभिश्च सममेव धर्मार्थकामा: सेवनीया:।

सर्वत्र भारते चतुर्वर्ग-चतुराश्रम-चतु:पुरुषार्थानां समानमेव सेवनं प्राक्तनकालादेव प्रतिष्ठितं विद्यते। एवं सति समानरूपेण चतु:पुरुषार्थानामुपदेश: सन्नति आचार्यविष्णुगुप्त: केन कारणेन सर्वानतिरिच्य अर्थ एव प्रधान: कथित: इति विचारणीयोऽयं विषय: राजशास्त्रे उपात्तो भवति धर्म एव प्रधान इति वचनेन धर्माविरोधी: अर्थ:, अर्थाविरोधी: कामश्च सेवनीय:। त्रिष्वप्यसामंजस्यं जाते समग्रा सामाजिकी व्यवस्था व्यवच्छिन्ना भवति। अतो धर्माविरोधी: अर्थ:, अर्थाविरोधि: काम: इति त्रय: सेवनीय:। परम् आचार्येण अर्थमूलौ हि धर्मार्थकामौ इति कथनेन राजशास्त्रे अर्थस्य (कोषस्य) विशेषमहत्वं प्रतीयते। अर्थमूलौ इति कथने आचार्यस्य को भाव: इत्यधिकृत्य विचारे कृते सतीदमेव प्रतीयते यद् अर्थमूलावेव धर्मकामौ इत्यर्थसाध्यावेव। यतो हि अर्थं विना न कामसिद्धि: न च धर्मसिद्धि:। धर्माजने दान-तीर्थाटन-वापी-कुल्या-गोशाला-धर्मशालादिकार्याणि समायान्ति। एतानि सर्वाण्येव अर्थमूलानि। एवं यदि अर्थो न स्यात्तर्हि अभीष्टकामोऽपि न सिद्धयेत। मन्ये अनेनैव कारणेन त्रिकालदर्शी आचार्य: चाणक्य: स्वशास्त्रे 'अर्थ एव प्रधान:' इति कथित:। अत्र 'एव' इति पदेन धर्मकामयोरप्राधान्यं प्रतिपादितम्। किञ्च राजसञ्चालने सर्वत्र सुखसमृद्धिप्रस्थापने अर्थ: (कोष:) एवादौ आवश्यक:। अन्यदपि नीतावुक्तम्-

**किं वासीत्थं न विचारणीयं वास: प्रधानं खलु योग्यताया:।**
**पीताम्बरं वीक्ष्य ददौ स्वकन्यां दिगम्बरं वीक्ष्य विषं समुद्र:॥**

अत्र सर्वसमर्थेऽपि शिवे उदासीत्वेन निरपेक्षत्वेन च समुद्रो देवाश्च तं गरलं ददौ। परं सापेक्षो विष्णु: परमशोभाढ्यै: अलङ्करणै: सुसज्जित: सन् लक्ष्मीभाग् अभूत्। अतो लोकेऽपि भौतिकवैभवस्य माहात्म्यं महत्वञ्च सर्वातिशायि वर्तते। मन्ये! आचार्यचाणक्य: एतेन सिद्धान्तेनाभिभूतस्सन् 'अर्थ एव प्रधान:' इति। परमत्रार्थो धर्मप्रधान: तत्प्रधानत्वेन कामप्रधान एव सञ्चय: कर्तव्य:।

कामस्योपभोग: सुन्दरीभि: नखशिखश्रृङ्गारालङ्कारादिमण्डिताभिर्जायते। परमत्र विधि: स्वच्छन्देन कस्यापि रमणीभि: कामोपभोगो न युक्त:, विधिना परिणीताभि: नखशिखालङ्कारादिभिरलङ्कृताभिरेव युक्त इति। एवमेव गोमूत्रं पवित्रं मूत्रत्वात् स्वमूत्रवदिति व्याप्त्या न स्वमूत्रमन्यमूत्रं वा ग्राह्यं गोमूत्रम् एवं विधित्वात्। एवमेव जीवनेऽर्थस्य प्रधानत्वेन धर्मकामयो: सिद्धिर्भवति, तदर्थं धर्मपूर्वकार्थव्यय एव युक्त:। एवं राजसञ्चालने प्रभूतार्थस्यावश्कता सम्पद्यते, परं तस्य विनमयो धर्मेण धर्मे कामे च राज्ञा

कर्तव्य इति आचार्यकौटिल्यस्य हार्दिको भावः। एतेनैव त्रिवर्गः परस्परमन्योन्यानुबन्धपूर्वक एव सेवितव्य इति सर्वो भावः जयमङ्गलाटीकादिसु विवृतः। उपाध्यायनिरपेक्षायामपि सर्वथा विषयसेवानिषेधे प्राप्ते चैवं नियमः अर्थ एव प्रधानः इत्युक्तम्। एतेनैव महर्षिणा वात्स्यायेन कासूत्रेऽपि उक्तम्–'श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधितिष्ठतानां स्वेषुस्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः।[1]

किञ्च उपाध्यायनिरपेक्षाटीकाकारः अग्रे विचारेऽपि सङ्केतयति यद् जीवनाय समुचित आहार आवश्यकः, परमाधिक्ये सन् रोगाय कल्प्यते। अतः आहार आवश्यकः सन्नपि नाधिकः न च न्यूनः तथैव सर्वे विषयाः यथायोग्यं सेवनीयाः। एवमुपचितेप्यर्थे नाधिको न च न्यून इति तथैव नियमः।

राज्ञां मुख्यं कार्यं प्रजानां पालन–पोषण–रञ्जन–रक्षणादिकं प्राधान्येन। यतो हि राज्ञि धनधान्यसमृद्धे राष्ट्रे प्रजानां समुचितं रक्षणं संवर्धनञ्च सम्भवति। धनधान्य–शक्तिसम्पन्ने राष्ट्रे आक्रान्ता शत्रुः राष्ट्रापकाराय नोतसहते। एतेन राष्ट्रस्य समृद्धयेऽभ्युदये च तन्मूले कोषस्य महती आवश्यकता भवति। यस्य कस्यापि राष्ट्रस्य यावती सुदृढ़ा सुव्यवस्थिता चार्थव्यवस्था सेत्स्यति तावती एव राष्ट्रस्य विकासः शक्तिसम्पन्नता च भविष्यति। यदि राजा यथा रघुवंशे उक्तम्–

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।**
**स्वपिता पितरस्तासां केवलं जन्महेतवः॥** इति।

अर्थाद्राजा दिलीपः स्वपूर्ववंशीयराजभिरिव ततोऽप्यधिकं राष्ट्रस्य प्रजानाञ्च संरक्षणाद् वस्तुतो दिलीप एव प्रजानां पिता इव बभूव। प्रजानां पितरस्तु केवलं जन्मकारणमेवासन्। इत्थं समुचितं राष्ट्रस्य प्रजायाः पालनेन च राजानां प्रजापतिरिव सम्मानयति प्रजा तथा चैतादृशस्य राज्ञः राज्यस्य वा सुखदुःखेषु प्राणार्पणेन साहाय्यं विदधाति।[2] एवञ्च सर्वथा आर्थिकदृष्ट्या समृद्धस्य राष्ट्रस्य सेनापि शक्तिसम्पन्ना भवति, राष्ट्रञ्चार्न्बहिः दृष्ट्या सुदृढं सुरक्षितञ्च जायते। एवं सुदढे राष्ट्रे शास्त्रव्यपि सुदृढानि वर्धितानि च भवन्ति। उक्तञ्च–

**शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते।**

प्राचीनराजाशास्त्रार्थशास्त्रदृष्ट्या विद्या चतुर्धा निगदिता–आन्वीक्षिकी, त्रयी, वार्ता दण्डनीतिश्च। तत्र त्रिवर्गप्राप्तिमूले वार्ता विद्या अर्थात् 'कोष' एव समायाति। तथा चात्र वार्ताविद्यायां कृषिः पशुपालनं व्यापारश्चान्तर्गता भवन्ति। इयमेव विद्या धान्य–पशु–हिरण्य–बज्र–मणि–माणिक्य–गोमेद–मौक्तिक–नीलक–प्रबाल–वैदूर्य–पुष्पराग–रजत–ताम्रादिखनिजपदार्थानां व्याख्या विधायिका परमोपकारिणी चास्ति।

---

१. कामसूत्रम् ११/१२
२. धर्मिकं पालनपरं सम्यक् परपुञ्जयम्।
राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः॥ कामन्दकीयनीतिसारः १/११

एतत्कारणेन कोषेन सेनाबलेन च स्वपक्षं परपक्षञ्च स्ववशे आनयति राजा।[१] पुरा हि वैदिककाले भारतवर्षे आयस्य मुख्यं साधनं कृषिः पशुपालनञ्चासीत्।[२] मन्त्रेषु यासां पञ्चभूमीनाम् (पञ्चक्षितिः) उल्लेखो जातः। ताश्च भूमयः तत्पञ्चनदीनाम्– गङ्गा, यमुना, सरस्वती, शतद्रीनां समीपस्था ये च देशा भूमिय आसन् ता एव कृषेराधिक्येन पञ्चनददेशः आहोस्वित् पञ्चाम्बुप्रदेश इति ऐतिह्य दृश्यते। अद्यापि पञ्चाम्बुः (पंजाब) सहितः तत्तत् प्रदेशाः विस्तृतभूभागाश्च वर्णिताः यासु नदीषु तटवर्तिनो देशाः त एव वस्तुतः कृषिप्रधानाः समग्रभारतवर्षस्यान्नदाने समर्थाश्च दरीदृष्यन्ते। किञ्च तद्देशीयः एकश्रेणीकः एव जाति क्रमशः पञ्चनदीतटवर्तिनः पञ्चजातीषु विभक्ता अभूवन्, त एव पञ्चजनपदेन ऋग्वेदे उल्लिखिताः, यासां मुख्यजीविका कृषिरेवासीत्।[३] एतत् सन्दर्भ एव तन्नदीतटस्थभूमिः (पञ्चकृषिवी) इति पदेन ऋग्वेदे बहुतः प्रतिपादितः।[४]

राज्यसञ्चालनव्यवस्था सर्वथा कोषेऽर्थे वा निर्भरा जायते। अत एव राजशास्त्रदृष्ट्या राज्ञा प्रथमं कोषसङ्ग्रह एव कर्त्तव्यः। अश्वाध्यक्ष-गजाध्यक्ष-सीताध्यक्ष-आकराध्यक्ष-कोष्ठागाराध्यक्ष-पण्याध्यक्ष-आयुधागाराध्यक्ष-शुल्काध्यक्ष-सूत्राध्यक्ष-सूनाध्यक्ष-नावध्यक्ष-रक्षाध्यक्ष-मुद्राध्यक्ष-विवीताध्यक्षादिसर्वे अध्यक्षा स्वस्वविभागमाध्यमेन उचितदृष्ट्या राजकोषसमृद्ध्यर्थं रक्षार्थञ्च कर्म कुर्युः।[५]

आचार्येण कामन्दकेनाभिमतमिदम्–

**पाशुपाल्यं कृषिः पण्यं वार्ता तु जीवनम्।**
**सम्पन्नो वार्तया साधु नावृत्तेर्भयमृच्छति।।**[६]

प्रसङ्गेऽस्मिन् उपाध्यायनिरपेक्षाटीकाकारेणोक्तम्–पाशुपाल्यमिति, पशवो हक्स्त्यश्वगोमहिष्यादयः। तान् पालयन्तीति पशुपालाः, हस्तिशिक्षाशालिहोत्रादिविदः। तेषां शास्त्रमनुष्ठानं च पाशुपाल्यं। कृषिरिति, कर्षणं तत्प्रतिपादकं पराशरादिप्रोक्तं शास्त्रमनुष्ठानं च। पण्यमिति, पणं व्यवहारं क्रयविक्रयलक्षणमर्हतीति

---

१. "कृषिपाशुपाल्ये वाणिज्या च वार्ता । धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। तया स्वपक्षं परपक्षं च वशीकरोमति कोशदण्डाभ्याम्।" कौटिलीयार्थशास्त्रम् १/३

२. ऋग्वेदः ५/७९/१२९/३, ६/४६/७

३. ऋग्वेदः ६/११/४, ६/५१/११, ७/३२/३२, ९/६५/३२

४. ऋग्वेदः २/२/१०, ४/३८/१०/२

५. बह्वादानोऽल्पनिःस्त्रावः ख्यातः पूजितदैवतः।
ईप्सितद्रव्यसम्पूर्णो हृद्यः स्वाप्तैरधिष्ठितः॥
मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः।
धर्मार्जितो व्ययसहः कोशः कोशज्ञसम्मतः।।
धर्महेतोस्तथार्थाय भृत्यानां भरणाय च।
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा॥ कामन्दकीयनीतिसारः ४/६०-६२

६. कामन्दकीयनीतिसारः २/१४

पण्यम्, पण्यशब्देन वाणिज्यमुच्यते। एतत् त्रयमेव जगद्वृत्तिहेतुत्वादिह जगति वर्तनात् 'वार्ता' इत्यभिधीयते। तया सम्पन्नो वार्तया विजिगीषुः साधु यथा भवति तथा, अवृत्तेरवर्तनाद् भयं न ऋच्छति न प्राप्नोति।[६]

सैन्यशक्तिसंवर्धनार्थं प्रजापालनार्थं रक्षणार्थं यज्ञादिधर्मानुष्ठानार्थञ्च राजकोषः सङ्ग्रहणीयः। ततो हि राजकोषो राज्ञः कृते परत्रेह च सुखदो भवति। विजिगीषुः राजा अधर्मशीलराज्ञः शत्रुराज्ञश्च भेदनीत्या दण्डनीत्या वा सर्वधनमपहृत्य स्वकीयं राजकोषं संवर्द्धयेत्। राजकोषः पूर्णतः समृद्धः सम्पन्नश्च भवितव्यः। येन विंशतिवर्षपर्यन्तं प्रजापालनं, राष्ट्रसंरक्षणं सैन्यशक्तिसंवर्द्धनञ्च भवेत्। वस्तुतः राष्ट्रशक्तिसमृद्धेः सैन्यबलसमृद्धेश्च मूलाधारः कोषः एव भवति। कोषेनैव सैन्यशक्तौ समृद्धिर्भवति, सैन्यशक्त्या कोषसञ्चयः, कोषसञ्चयेन राष्ट्रसमृद्धिः, राष्ट्रसमृद्ध्या चारिक्षयो भवति।[१]

उपर्युक्तविवेचनेदं स्पष्टं भवति यद्राज्यसञ्चालनं कोषेनैव भवति। चाणक्यसूत्रेष्वपि कोषस्य महन्महत्त्वं दरीदृश्यते–'सुखस्य मूलं धर्मः', 'धर्मस्य मूलमर्थः', 'अर्थस्य मूलं राज्यम्', 'जितात्मा सर्वार्थैः, संयुज्यते', 'अर्थसम्पत्प्रकृतिसम्पदं करोति', वृत्तिमूलमर्थलाभः' अर्थमूलं कार्यम्', 'अर्थवान् सर्वलोकस्य बहुमतः', महेन्द्रमप्यर्थहीनं न बहुमन्यते लोकः', 'अर्थमूलौ धर्मकामौ',। अतः कोषवैशिष्ट्यस्य तथा चार्थवैशिष्ट्यस्योपयोगित्वस्य चाधारेणैवार्थशास्त्रे समीचीनमुक्तम्–'अर्थ एव प्रधान इति कौटिल्यः'।

---

६. कामन्दकीयनीतिसारः, उपाध्यायनिरपेक्षाटीका २/१४

१. बलप्रजारक्षणार्थं यज्ञार्थं कोशसङ्ग्रहः।
परत्रेह च सुखदो नृपस्यान्यश्च दुःखदः।।
अधर्मशीलात् नृपतिः सर्वशः संहरेद्धनम्।
छलाद् बलाद् दस्तुवृत्त्या परराष्ट्राद्धरेत् तथा।
दण्डभूभागशुल्कैस्तु विना कोशाद् बलस्य च।
संरक्षणं भवेत् सम्यग् यावद्विंशतिवत्सरम्।
तथा कोशस्तु सन्धार्य्यः स्वप्रजारक्षणक्षमः।।
बलमूलो भवेत् कोशः कोशमूलं बलं स्मृतम्।
बलसंरक्षणात् कोशराष्ट्रवृद्धिररिक्षयः।।
जायते तत् त्रयं स्वर्गः प्रजासंरक्षणेन वैः।। –शुक्रनीतिः ४/२/३, ७, १३-१५

# पुंसवनसंस्कारवर्णनम्

**सुश्री मधुमितादास**

संस्क्रियते इति संस्कारः। "सम्" उपसर्गपूर्वक "कृञ्" धातोः "घञ्" प्रत्ययेन एवं "संपरिभ्यां करोतौ भूषणे" इति सूत्रे भूषणार्थे "सुट्" प्रत्यये "संस्कारः" शब्दः निष्पद्यते। तथा च मीमांसका "यज्ञाङ्गभूतपुरोडाशादेर्विधिवच्छुद्धौ" इति प्रमाणानुसारं संस्कारशब्दस्य शुद्ध्यर्थतां वर्णयन्ति।[1] अद्वैतवेदान्तिनो जीवे विद्यमानानां शारीरिकक्रियाणां मिथ्यारोपमेव संस्कारं मन्यन्ते। नैयायिका भावव्यक्तीकरणार्थमात्मव्यञ्जिकां शक्तिमेव संस्कारं मन्यन्ते, यत्परिगणनं वैशेषिकदर्शने चतुर्विंशतिगुणानामन्तर्गतं कृतमास्ते। काशिकावृत्त्यनुसारेण "उत्कर्षाधानं संस्कारः" इति प्रतीयते। "आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः" इति संस्कारप्रकाशग्रन्थानुसारं संस्कारस्य परिभाषा इति ज्ञायते।

अवाञ्छितप्रभावस्य निराकरणम् अभीष्टप्रभावानामामन्त्रणं धन-धान्य-पशु-सन्तान-दीर्घायुः-समृद्धि-शक्ति-बुद्धीनां प्राप्तिः, व्यक्तेः नैतिकविकासः, गर्भबीजसम्बन्धिदोषदूरीकरणम् इति संस्कारस्य उद्देश्यम्।

संस्कृतसाहित्येऽपि संस्कारस्य प्रयोगः विभिन्नार्थे तत्र तत्र ग्रन्थेषु उपलभ्यते। यद्यपि संस्कारस्य संख्याविषये विप्रतिपत्तयः सन्ति तथापि षोडशसंस्काराः इत्यत्र ऐकमत्यं परिलक्ष्यते। तेषां प्रमुखसंस्काराणां नामानि यथा–

गर्भाधानम्, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्म, नामकरणम्, निष्क्रमणम्, अन्नप्राशनम्, चूडाकरणम्, कर्णवेधः, विद्यारम्भः, उपनयनम्, वेदारम्भः, केशान्तः, समावर्त्तनम्। विवाहः, अन्त्येष्टिः इति।

पुंसवनसंस्कारः तन्मध्ये अन्यतमः। स चात्र पुंसवनसंस्कारः उपस्थाप्यते।

## पुंसवनसंस्कारवर्णनम्

गर्भधारणस्य निश्चयानन्तरं गर्भस्थशिशोः पुंसवनसंस्कारः भवति। अतः गर्भधारणाद् अनन्तकालीनः

---

१. वाचस्पत्ये, ५, पृ. ५१८८

संस्कार: अयं भवति। गर्भस्य स्पष्टत्वे तस्य स्पन्दनानुभवपूर्वं पुंसवनसंस्कारं कुर्यात्। अस्य संस्कारस्य अयमेवाभिप्रायो भवति यत् "पुमान् येन संस्कारेण जायते तत् पुंसवनं नाम"। यथोक्तं शौनकेन वीरमित्रोदयसंस्कारप्रकाशे–

**पुमान् प्रसूयते येन कर्मणा तत् पुंसवनमीरितम्।**[२] इति।।

गर्भस्य पुंरूपताया आपादक: संस्कारविशेष एव पुंसवनमित्युच्यते। अवसरेऽस्मिन् उच्चार्यमाणा ऋच: पुत्रजन्मैव अनुमोदयन्त्यो लक्ष्यन्ते–

**पुमांसं पुत्रं जनय तं पुमाननु जायताम्।**
**भवसि पुत्राणां माता जातानां जनयाश्च यान्।।**
**यानि भद्राणि बीजान्यृषभा जनयन्ति च।**
**तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव।।**[३] इति।।

अर्थात् हे स्त्री! त्वं पुंमासं पुत्रं जनयतु अत: अनु अपि वीरपुत्रं जनयतु।

अथर्ववेदे पुत्रसन्ततिप्राप्त्यर्थं स्तुतय: उपलभ्यन्ते। यथा अथर्ववेदे–

**आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम्।**
**आ वीरोऽत्र जायताम् पुत्रस्ते दशमासस्य।।**[४] इति।।

अर्थात् "पति: पत्नीं प्रार्थयति, यथा धनुषि बाणसन्धानं क्रियते। तथा तव योन्यां गर्भाशये वा पुत्राभिलाषं करोमि अहमिति।"

पुन: –

**यासां द्यौः पिता पृथिवी माता समुद्रो मूलं विरुधां बभूव।**
**तास्त्वा पुत्रं विद्याय दैवीः प्रावन्त्योषधयः।।**[५] इति।।

अर्थात् यस्य वृक्षस्य पिता द्यौ:, तथा माता पृथिवी, समुद्रो मूलं तत् दैवी: औषधि: पुत्र प्राप्त्यर्थं मम सहायं कुरु इति।

---

२. शौनक:, वि.मि.सं.प्र.–पृष्ठा–१६६
३. अ.वे. ३/२३/३
४. सामवेदे–३/२३/२
५. अ.वे. ३/२३/६

अस्य संस्कारस्य मुख्यम् उद्देश्यं पुत्राभिलाष इति अथर्ववेदे कथ्यते। यथा–

**यं परिहस्त मबिभरदितिः पुत्रकाम्या।**
**त्वष्टा तमस्या आबध्नाद्यथा पुत्रं जनादिति।।**[६] इति।।

वेदे अयं "पुंसवन" "प्राजापत्यसंस्कारः" इति नाम्ना उल्लिखतः अस्ति। यथा–

**कृणोमि ते प्राजापत्यमा योनिं गर्भ एतु ते।।**[७] इति।।

**पुंसवनकर्ता**

पतिः पुंसवनसंस्कारस्य प्रथमोऽधिकारी वर्तते। यथा–

**गर्भाधानादिसंस्कर्ता पतिः श्रेष्ठतमः स्मृतः।।** इति।।[८]

संस्कारानुष्ठानात् प्राक् यदि पतिः मृतः, संन्यस्तः, पतितः, देशान्तरगतो वा भवेत् तदा इदं कर्म देवरः, गुरुः, स्वकुलीनः श्रेष्ठः तद्गोत्रजो वाऽपि अनुष्ठातुमर्हति। यथा–

**मृतो देशान्तरगतो ता स्त्री यद्यसंस्कृता।**
**देवरो वा गुरुर्वाऽपि वश्यो वाऽपि समाचरेत्।।**[९] इति।।

एष निर्देश अन्येष्वपि कर्मान्तरेषु सामान्यतो विचारणीयः।[१०]

**उपयुक्तसमयः**

संस्कारस्य अस्य अनुष्ठाननिमित्तं उपयुक्तः समयोऽपि सूचितो वर्तते। गृह्यसूत्रेषु अस्य संस्कारस्य कालः प्रतिपादितो वर्त्तते। तदनुसारं गर्भधारणात् परं तृतीये मासि चतुर्थे वा मासि एतत् कर्त्तव्यम्। गर्भावस्थायां गर्भगतिशीलात् पूर्व अयं संस्कारः कर्तव्य इति याज्ञवल्क्यः कथ्यते। यथा याज्ञवल्क्यः –

**गर्भाधानमृतौ पुंसस्सवनं स्पन्दनात् पुरा।।** इति।।[११]

---

६. अ.वे. ६/८१/३
७. अ.वे. ३/२३/५
८. ब्रह्मपुराणम् – नि. सिं, पृ. ४९२
९. नि.सिं, पृ. ४९२
१०. नि.सिं, पृ. ४९२
११. याज्ञ. स्मृति १.११

शङ्खस्मृतिः अपि कथयति–

**गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्तितः।**
**पुरा तु स्पन्दनात् कार्यं पुंसवनं विचक्षणैः।** इति।।[१२]

गर्भस्पष्टानन्तरं गर्भाधानमिति कथ्यते। गर्भस्पन्दनात् पूर्वं बुद्धिमान् जनाः पुंसवनं संस्कारं कुर्युः।

वीरमित्रोदयसंस्कारप्रकाशे –

**तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम्।**
**गृष्टेश्चतुर्थे मासे तु षष्ठे मासेऽथवाऽष्टमे।** इति।।[१३]

अत्र शङ्का जायते यथा अयं संस्कारः प्रत्येकं गर्भे भवति वा न? शौनकेन कथ्यते एतत् संस्कारानुष्ठानं प्रत्येकं गर्भधारणानन्तरं कुर्युः, यतः स्पर्शेन तथा औषधिसेवनेन गर्भः पवित्रं तथा शुद्धं भवति। एतत् संस्कारानुष्ठानेन उच्चारितेन मन्त्रेण जनानां पूर्वजन्मनः स्मरणं भवति। याज्ञवल्क्यस्मृतेः विज्ञानेश्वरप्रणितमिताक्षराटीकायां अस्मिन् विषये उल्लेखितम्। यत्–

**एते च पुंसवन-सीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये न प्रतिगर्भम् इति।।**[१४]

## मुहूर्त्तविवेचनम्

अयं संस्कारः शुक्र-सोम-बुध-बृहस्पतिवारेषु मृगशिरा-पुष्य-मूल-श्रवण-पुनर्वसु-हस्तानक्षत्रेषु, प्रतिपदा, द्वितीया, तृतीया, पञ्चमी, सप्तमी, दशमी, एकादशी, त्रयोदशी तिथिषु च करणीयः।

## संस्कारविधिः

संस्कारदिवसे गर्भिणी उपवासं करोति। स्नानं कृत्वा नविना वस्त्राणि धारयति। रात्रौ वटवृक्षस्य शाखायाः चूर्णं कृत्वा तस्या रसं निष्कास्य स्त्रिया दक्षिणनासिकाछिद्रे "हिरण्यगर्भ" - आदिमन्त्रैः क्षिप्यते तद्रसः। सुश्रुताभिमतं यत् वटवृक्षे विशिष्टा गुणाः सन्ति ये समस्तकष्टानि निवारयितुं क्षमाः। आश्वलायनगृह्यसूत्रानुसारं तु पुनर्वसुनक्षत्रे उपवासं कृत्वा पुष्यनक्षत्रे गर्भिणी आत्मवर्णकल्पाया गोवत्सवत्या दध्नि शिम्बिकस्य कणद्वयं यवस्य चैकं कणं दद्यात्। "त्वं किं पिबसि" – इति पृष्टे सति स्त्री वक्ष्यति – पुंसवनम् अर्थात् पुत्रस्य उत्पत्तिः। एवं पतिः वारत्रयं तादृशेन दध्ना क्रियां करोति।

---

१२. शङ्खस्मृतिः २.१
१३. वी.मी.सं.भाग-१, पृ. १६८
१४. याज्ञ. स्मृ. - १/११ (मिताक्षरा टीका)

स्वस्य पुत्रस्य बलं स्वास्थ्यं च काङ्क्षमाणः पिता ललनाया अङ्के स्पृष्ट्वा "सुपर्णोऽस्ति" – इति ऋचाया उच्चारणं करोति। एतत् कृत्यं जीवनस्य उत्साहस्य सूचकमस्ति।

**उपसंहारः**

गर्भस्थशिशोः पुत्रत्वं विधातुं पुंसवनसंस्कारः क्रियते। अधुनापि सर्वे लोकेऽस्मिन् वैदिकब्राह्मणम् आहूय वैदिकप्रकारेण वेदमन्त्रोच्चारणपूर्वकम् एतत्कर्मणः आयोजनं कुर्वन्ति। धार्मिकविश्वासः संस्कारस्यास्य मूलभूतो भवति। पुंसवनस्य विशेषः एवं भवति यत् – गर्भस्थशिशोः पुंस्त्वं भवेत् तथा तस्यायुरपि वृद्धिं गच्छेत् तदर्थं ज्ञातिकुटुम्बैः सह पारिवारिकजनाः भगवन्तं आराधयन्ति। पुंस्त्वलक्षणानाम्– आविर्भावात्प्राग्गर्भस्थशिशोः लिङ्गं परिवर्तितुं शक्यते भगवत् कृपया। एवमेव शिशोः तथा मातुः सुरक्षार्थं वनौषधीनां प्रयोगः दृश्यते ग्रामीणपरम्परायाम्। एवं कृते गर्भस्थशिशोः कल्याणम् अवश्यं भवति। परन्तु आधुनिकसमाजे बहवः जनाः एतां परम्परां विस्मृतवन्तः। अत एतत् विकलाङ्गसन्तान–स्वेच्छाविरुद्धसन्तानोत्पत्तये मूलकारणभूतम् भवति। तदर्थम् अवश्यमेव शिशोः पुंसवनसंस्कारः करणीयः। तेन सः संस्कृतो भवति इत्येव आशयः।

# काव्य की असाधारणधर्मता : एक अवेक्षण

**प्रो. रहस विहारी द्विवेदी**

लोकोत्तर आह्लाद काव्य का प्रमुख अन्तस्तत्त्व है किन्तु यह मूर्ति, चित्र और नृत्य से भी प्राप्त होता है, अतः उसकी असाधारणता (लक्षण) के प्रतिपादन में उसके अधिकरण '**वाक्**' या उसके अवयवों का भी प्रतिपादन आचार्यों ने किया है, जिससे लक्षण अतिव्याप्त न हो। अग्निपुराणकार ने '**इष्टार्थव्यवच्छिन्ना पदावली**' को काव्य का अधिकरण कहा था, किन्तु दण्डी ने उसमें '**शरीरं तावत्**' जोड़कर उसका मानवीकरण कर दिया। परिणामतः जिस प्रकार शरीर में आत्मा, आभूषण, अवयवसंस्थान आदि होते हैं, उसी प्रकार काव्यपुरुषरूपक बन गया और राजशेखर आदि आचार्यों ने मानव शरीर की विविध स्थितियों के अनुसार काव्यतत्त्वों का स्थान निर्धारित कर दिया। परिणामतः लोकोत्तर आह्लाद, जो काव्य का प्रमुख अन्तस्तत्त्व था– उसे रस, ध्वनि, अलंकार, रीति, वक्रोक्ति और औचित्य नाम देते हुए आचार्यों ने उसे काव्य की आत्मा या जीवन कहा। यद्यपि सभी काव्यों के अधिकांश वर्णनों में इनका समिश्र रूप ही प्राप्त होता है, किसी-किसी स्थल पर इनमें से एक की विशेष प्रमुखता रहती है। जैसे सभी नदियाँ अन्ततः सागर में गिरती हों, उसी प्रकार काव्य के रस, ध्वनि और अलंकार प्रस्थानों तथा रीति, वक्रोक्ति, और औचित्य सिद्धान्तों में स्थापित काव्यतत्त्व लोकोत्तर आह्लाद में ही समाहित हो जाते हैं। हमने अपनी '**नव्यकाव्यतत्त्व-मीमांसा**' में इसीलिए लिखा है–

**रसोऽलङ्काररीति च ध्वनिर्वक्रोक्तिरौचिती।**
**यान्ति लोकोत्तराह्लादमर्णवं सरितो यथा॥**

काव्य की असाधारणता के प्रतिपादन में उत्तरवर्ती आचार्यो द्वारा खण्डन-मण्डन का संरम्भ भी दिखाई देता है। यह भौतिक सम्पत्ति पर कब्जा करने जैसा द्रोहात्मक विवाद नहीं था। यहाँ शास्त्रीय चिन्तन को अग्रेसर करना तथा स्वशास्त्र में बुद्धिनिर्मलता का आधान करना उनका लक्ष्य था। इसका परिणाम यह हुआ कि इक्कीसवीं शताब्दी के प्रारम्भ होने पर भी ऋग्वेद से प्रवर्तित काव्यस्वरूप की अवधारणा '**मधुमद वचोऽशंसीत काव्यः कविः**' के अनुरूप कवि की वाणी (काव्य) पर **काव्यालङ्कारसूत्रम् ( आचार्य राधावल्लभ त्रिपाठी ), काव्यसिद्धान्तकारिका ( आचार्य अमरनाथ पाण्डेय ), अभिराजयशोभूषणम् ( आचार्य अभिराज राजेन्द्र मिश्र )** और

**नव्यकाव्यतत्त्वमीमांसा ( आचार्य रहसविहारी द्विवेदी )** जैसे ग्रन्थ लिखे गए हैं। बीसवीं शताब्दी के अन्त में भी **काव्यालङ्कारकारिका ( आचार्य रेवाप्रसाद द्विवेदी )** और काव्यसत्यालोक (आचार्य ब्रह्मानन्द शर्मा) की कृतियों ने काव्यशास्त्रीय चिन्तन को पुनरुज्जीवित करने का श्लाघ्य प्रयास किया है। डॉ. हरिसिंह गौर विश्वविद्यालय सागर तथा राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) के जयपुर परिसर में नए काव्यशास्त्रीय ग्रन्थों पर गम्भीर विचार-विमर्श विद्वानों ने किया है। काव्यसमीक्षा के नए आयाम पर इलाहाबाद विश्वविद्यालय में भी सफल राष्ट्रिय संगोष्ठी का आयोजन किया गया है। **डॉ. आनन्द कुमार श्रीवास्तव** ने नवीन काव्यशास्त्रियों तथा उनकी कृतियों पर हिन्दी तथा अंग्रेजी में ग्रन्थ लिखे हैं। खण्डन-मण्डन का संरम्भ आज भी है, जो अग्रिम विवेचन से स्पष्ट हो जायेगा।

वस्तुतः शरीर या स्वरूप शब्द का प्रयोग कर आचार्यों ने वाणी या शब्दार्थ के काव्योचित रूप का तथा लक्षण या विलक्षण शब्द के प्रयोग से उसके अन्तस्तत्त्व लोकोत्तर-आह्लाद का प्रतिपादन किया है। यथा **'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली'** (दण्डी), **'शब्दार्थशरीरं तावत्काव्यम्'** (आनन्दवर्धन), **'शब्दार्थौ ते शरीरम्'** (काव्यपुरुष के प्रतिपादन में राजशेखर), **'सहृदयहृदयाह्लादित्वमेव काव्यत्वलक्षणम्'** (आनन्दवर्धन), **'विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म'** (मम्मट)।

वाग्देवतावतार के काव्योचित किन्तु उपसर्जनीकृत (गौण) होने वाले शब्दार्थस्वरूप को उसका लक्षण मानने की भ्रान्ति आचार्य विश्वनाथ और पण्डितराज के खण्डनों से विशेषरूप से उत्पन्न हुई। जबकि मम्मट ने **'तत्स्वरूपमाह'** लिखकर इस पंक्ति को लिखा है– **'तददोषौ शब्दार्थौ–०'**। जिसे प्रायः सभी आचार्य और विद्वान् अपने ग्रन्थों में उद्धृत करते हैं। जहाँ मम्मट काव्य की विलक्षणता (अन्तस्तत्त्व) का प्रतिपादन करते हैं, उसके पूर्व **'इहाभिधेयं सप्रयोजनमाह'** लिखते हैं। एक व्याकरणवेत्ता आचार्य, जो कारक और समास के नियमों का मर्मज्ञ है, **'सप्रयोजनम्'** पद को **'प्रयोजनेन सह'** (सहायुक्तेऽप्रधाने) का ध्यान रखते हुए, निश्चित ही प्रयोजन का प्रतिपादन अप्रधानरूप में और प्रमुख रूप से अभिधेय (लक्षण) का प्रतिपादन करेगा। वस्तुतः प्रयोजन, हेतु और लक्षण इन तीनों का अन्तःसम्बन्ध है। प्रतिभा या शक्ति का लोकोत्तराह्लाद से, व्युत्पत्ति का शब्दार्थ के प्रयोग और लोकशास्त्र तथा इतिहास आदि के सुभग सन्निवेश से एवं अभ्यास का काव्यविधा, छन्दः प्रयोग आदि से अभिसम्बन्ध है।

समग्रता में आचार्य के दृष्टिकोण को देखना न्यायसंगत होता है, किसी एक पंक्ति से आचार्य या कवि की समग्र अवधारणा निर्धारित करना घातक होता है। जैसे **'पूजिय विप्र सकल गुण हीना सूद्र न गुणगण ज्ञान प्रवीना'** से गोस्वामी तुलसीदास के प्रति अवधारणा बनाना अनुचित है, क्योंकि समग्र रचना में एक आततायी ब्राह्मण का सर्वनाश और वध कथा संविधानक

